

श्री

# हरिमीडेनामकंस्तोत्रम्।

हरितत्त्वमुक्तावल्याख्यव्याख्यासमन्वितम्।

ब्रह्मविद्वरिष्ठश्रीमत्परमहंसपरिव्राजक
स्वामिश्रीमदऽच्युतानन्दगिरिनामधेयैः
स्वयमेवसंशोध्य

श्रीमुंबापुर्याम्

"निर्णयसागरयन्त्रालये" मुद्रापितम्।

प्रथमावृत्तिः २०००.



दश आना मौल्यम् ॥॥= ।|=)

# उपोद्घातः

इहतावत्सन्तिवसुंधरायां भगवत्पूज्यपादश्रीमच्छंकरस्वामिनिर्मिताबहवोग्रन्थाः । स्तोत्राणिचतत्प्रणीतानिबहून्येवोपलभ्यन्ते । मुद्रणमपितेषांबहूनांजातंप्रसिद्धञ्चैतत् । तन्मध्येहरिस्तुतिनामकंस्तोत्रं हरितत्त्वमुक्तावल्याख्यव्याख्यासमन्वितं प्रस्थानत्रयोक्तब्रह्मविद्यासूचकत्वेन श्रवणमननादिरूपत्वेनच ब्रह्मात्मविवेचनविधावग्रसरत्वेनवरीवर्ति । परन्त्वहहेदृशस्याप्यत्युत्तमस्यग्रन्थस्यनाद्यपर्यन्तंमुद्रणंजातमितिमत्वाब्रह्मविद्वरिष्ठैः श्रीमत्परमहंसपरिव्राजकस्वामिश्रीअच्युतानन्दगिरिनामधेयैः स्वयमेवसंशोध्यमुद्रापितम् । एतद्ग्रन्थविचारणेमुमुक्षूणांशरीरतोवृद्धानामपिक्लेशोनस्यादतस्तत्कृपयास्थूलाक्षरैरेवैनंतेस्वामिनोमुद्रापितवन्तः । अस्मिन्ग्रन्थेश्रुतिसूत्रार्थस्याधिक्यमस्त्यतोविचारद्वाराझटित्येवब्रह्मबोधजनकत्वेनमोक्षप्रदोऽयंग्रन्थोऽतोऽवश्यमेवैनंभवन्तोविचारयन्तु । विचारपूर्वकंसंशोधितेपिग्रन्थेक्वचिदस्त्यशुद्धंतद्ग्रन्थावसानस्थशुद्धिपत्रेणसंशोधनीयमित्यलम् ॥



# ॐ श्रीगणेशायनमः ॥

सत्यंज्ञानंशुद्धं । पूर्णंहृदिभातं ॥ हर ॥ वन्देशम्भुंशांतं । मायागुणरहितं । साक्षिरूपंतत्त्वं । विद्वद्भिर्गम्यं ॥ हर ॥ वेदैर्ज्ञेयंनित्यं । गुरुभक्तैर्वेद्यं । ॐ हरहरहरमहादेव ॥१॥ देवान्भीतान्दृष्ट्वा । यःकृपयाविष्टो ॥ हर ॥ विषपानमपिकृत्वा । ऽसितकंठोजातः । त्रिपुरंबिभिदेयुद्धे । दुर्भेद्यंसर्वैः ॥ हर ॥ तंवंदेसर्वेशं । देवैर्हृदिध्यातं । ॐ हरहर० ॥ २ ॥ विघ्नविनाशनकर्ता । भवतांयस्तातः ॥ हर ॥ पूज्योनिखिलैर्देवै । ईरितंहरतुनः । स्कंदः पुत्रोबलवान् । तारकासुरहंता ॥ हर ॥ स्वमात्रेवरदाता । ब्रह्मचर्य्यंधर्त्ता । ॐ हरहर ॥ ३ ॥ दशमुखबाणप्रभृतयो । भक्तास्तेजाता ॥ हर ॥ नाहंवक्तुंशक्तः । परिगणनंकृत्वा । येदेवानामैश्वर्य्यं । स्वाधीनंचक्रुः ॥ हर ॥ तेषांचित्रंवीर्य्यं । तवकृपयाजातं । ॐ हरहर० ॥ ४ ॥ पूजांकर्तुंविष्णु । र्नेत्रंत्वयिसमर्प्य ॥ हर ॥ राज्यंकुरुतेजगतां । त्रयाणांतवदृष्ट्या । यती-

नांहृदयेस्थित्वा । कामंनाशयिता ॥ हर ॥ गंगाध-
रशिवशंकर । गिरिजाधीशस्त्वं । ॐ हरहर० ॥ ५॥
संहर्तृशिवरूप । मुग्रंतवध्यात्वा ॥ हर ॥ भीतादेवाः
सर्वे । भक्तिंत्वयिचक्रुः । दुःखंदृष्ट्वाजगति । शरणंत्वां-
यामो ॥ हर ॥ देवानामपिदेवं । महादेवंप्रणुमः । ॐ
हरहर० ॥ ६ ॥ त्यक्त्वाधर्मंब्रह्मा । दुहितर्य्यासक्तः ॥
हर ॥ दंडंप्राप्तस्त्वत्तः । पंथानंनीतः । विद्योपदेष्टुस्त्व-
त्तः । सनकाद्याभक्ता ॥ हर ॥ उपदेशंशृण्वंति । वै-
राग्येसक्ताः ॥ ॐ हरहर० ॥ ७ ॥ प्राणान्तेवैकाश्यां ।
मुक्तिंसर्वेभ्यो ॥ हर ॥ वेदपुराणैःकथितां । ददतेनि-
त्यंयः । सर्वज्ञंतमनादिं । स्तौतियोभक्त्या ॥ हर ॥
अर्थंकामंधर्मं । मोक्षंलभतेसः ॥ ॐ हरहरहरमहादेव
॥ ८ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यभगवत्पू-
ज्यपादश्रीमच्छंकराचार्यसंप्रदायप्रविष्ट स्वामिलक्ष्म-
णानन्दगिरिशिष्येणस्वामि अच्युतानन्दगिरिणाविर
चितमिदंनीराजनम् ॥ ॐ श्रीविश्वेश्वरोविजयते ॥



## ॥ श्रीगणेशाय नमः ॥

नित्यं निजानंदसदद्वितीयं शुद्धं विभुं सत्यमतिस्वतंत्रम् ॥ सूक्ष्मं निरस्ताखिलदृश्यमीशं प्रत्यंचमात्मानमहं भजामि ॥ १ ॥ शंकरं शंकराचार्यं केशवं बादरायणम् । सूत्रभाष्यकृतौ वंदे भगवंतौ पुनः पुनः ॥ २ ॥

सत्यज्ञानानंदात्मकमद्वितीयं ब्रह्मैव शुद्धसत्वप्रधानमायोपाधिकं सदीश्वरभावं मलिनसत्वप्रधानाविद्योपाधिकं सज्जीवभावं च जगाम । "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इति तापनीये श्रवणात् । तत्रमायाप्रतिबिंब ईश्वरः । तां मायां वशीकृत्य सर्वज्ञः सर्वशक्तिश्च जीवानां सर्वेषामभ्युदयापवर्गार्थं संकल्पमात्रेणैव लीलया जगतः सर्गस्थितिप्रलयानाचरति । तत्र ये जीवाः स्वाज्ञारूपश्रुतिस्मृत्युक्तमार्गा-

नतिलंघनेन स्वात्मानं भजंते तेषामनुग्रहायोपासनार्थं शंखचक्रगदाशूलमृगपरशुधरं नीलोत्पलकालमेघपूर्णचंद्रस्फटिकसमानवर्णं आनंदघनं सर्वांगसुंदरं मूर्तिद्वयं शुद्धसत्वमयं बहुलीलास्पदं विष्णुशंकराख्यं स एव जग्राह। तच्च मूर्तिद्वयं वैकुंठकैलासादिषु भक्तानां हृदये च नित्यं सन्निहितं वर्तते। तत्र च भगवान् विष्णुः फलत्यागपूर्वकं निरंतरानुष्ठितवेदानुवचनयज्ञदानतपोभिर्विमलीकृतस्वांतानां नित्यानित्यवस्तुविवेकेन तृणीकृतब्रह्मलोकादिभोगानां शमदमादिमतां मुमुक्षूणां बहुविधस्वनिःश्वासभूतवेदार्थविचारासमर्थानां पुरुषाणां मोक्षसाधनीभूतब्रह्मात्मतत्त्वबोधनाय स्वांशेन श्रीभगवद्बादरायणरूपेणावतीर्णो बहुविधन्यायोपेतैरध्यायचतुष्टयात्मकैर्ब्रह्मसूत्रैः सकलवेदांतवाक्यानि संग्रंथयामास। तानि च सूत्राण्यतिगंभीरार्थतया दुरवगमाभिप्रायाणि संति। इदानीं कलौ दुष्टचित्तैर्भेदवादिभिरभेदवादिभिश्च कैश्चिदन्यथान्यथा योजितानि पुरुषार्थ-





पर्यवसायीनि न बभूवुः । अथ भगवान् परमेश्वरः सर्वज्ञः शंकरः करुणया लोकानुग्रहार्थं स्वांशेन श्रीसर्वज्ञभगवत्पादशंकराचार्यरूपेण ब्रह्माद्यंशैः शिष्यभूतैः सहावतीर्य ब्रह्मसूत्रव्याख्यानरूपश्रीमच्छारीरकभाष्यकरणेन सकृच्छ्रवणमात्रेणाविद्यातिमिरतिरस्कारपटीयसो मुख्याधिकारिणः पुरुषधौरेयाननुजग्राह । अथेदानीं ब्रह्मसूत्रार्थमीमांसाऽसमर्थानलसानननायासेन झटिति ब्रह्मतत्त्वं साक्षाच्चिकीर्षतो मंदाधिकारिणोऽनुग्रहीतुकामः श्रीभगवान् भाष्यकारस्तेषां ब्रह्मतत्त्वं करतलबिल्वफलीकारयितुं जपमात्रेण सकलपुरुषार्थसाधकं सर्ववेदांतसारभूतं श्रवणमनननिदिध्यासनात्मकं हरिस्तोत्रमारिप्सुश्चिकीर्षितं प्रतिजानीते ॥

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् ॥ यस्मिन्दृष्टे नश्यति

तत्संसृतिचक्रं तं संसारध्वांतवि-
नाशं हरिमीडे ॥ १ ॥

स्तोष्य इति ॥ विष्णुं व्यापनशीलं त्रिविध-परिच्छेदशून्यं ब्रह्मेत्यर्थः । स्तोष्ये आरोपितसकलाधिष्ठानतया सर्वात्मकत्वेनानंतकल्याणगुणतया वस्तुतो निर्विशेषचिन्मात्रस्वरूपतया च कीर्तयिष्य इति प्रतिज्ञा । ननु लक्षणप्रमाणाभ्यां वस्तुसिद्धेः कीर्तनीयस्य विष्णोः किं लक्षणं किं च प्रमाणमित्याशंक्य जगत्कारणत्वम् । "यतो वा इमानि भूतानि जायंते" इत्यादिश्रुत्युक्तं लक्षणमाह । जगदादिमिति । जगतः वियदादिप्रपंचस्य आदिं कारणं सकलजगदुपादानत्वे सति तत्कर्तृत्वमिति विवक्षितम् । ततश्चाव्याकृतप्रधानपरमाण्वादौ तटस्थेश्वरे च नातिव्याप्तिः । ननु इदं अभिन्ननिमित्तोपादानत्वं कुत्राप्यप्रसिद्धम् । घटादिषु सर्वत्र उपादाननिमित्तयोर्भेदस्यैव दर्शनात् । सर्वोपादानत्वमप्यप्रसिद्धं मृत्ति-

कादेरेकैकोपादानत्वस्यैव दर्शनात् । ततः कथमप्रसिद्धं लक्षणमुच्यते । प्रसिद्धस्यैव लोके लक्षणत्वदर्शनादिति चेदुच्यते । पृथिव्यप्तेजोवायवो विप्रतिपन्नाः । उत्पत्तिमंतः पृथिवीत्वादेः मृदुत्पन्नघटचंद्रकांतोत्पन्नजलारण्युत्पन्नाग्निव्यजनात्पवनवदिति कार्यत्वमनुमाय आकाशस्यापि भूतत्वहेतुना कार्यत्वानुमानानंतरं पृथिव्यादीनि सदुपादानानि तदुपरक्ततया प्रतीयमानत्वाद्यन्नियमेन यदुपरक्ततया प्रतीयते । तत्तदुपादानं यथा घटादि मृदाद्युपादानमिति लाघवात् सर्वस्य जगत एकसत्प्रकृतिकत्वस्य तत एवाभिन्ननिमित्तोपादानकत्वस्यापि सिद्धिर्भवति । परमते च घटेश्वरसंयोगादौ जीवात्मगतज्ञानादौ चाभिन्ननिमित्तोपादानत्वदर्शनात् । ततश्चानुमानसिद्धमभिन्ननिमित्तोपादानत्वमनूद्य तस्य ब्रह्मत्वबोधनं श्रुत्या संभवति । एवंच श्रुतेर्लक्षणपरत्वाभावेनानुमानसिद्धमभिन्ननिमित्तोपादानत्वमनूद्य तस्य ब्रह्मत्वबोधनमात्रेण न वाक्यभेदप्रसंगः । तस्य च ब्रह्मणः

स्वरूपमानंदाद्ध्येव खल्विमानि भूतानीति वाक्येन निर्णीयते। प्रमाणं च विष्णौ "शास्त्रयोनित्वात् तत्तु समन्वयात्" इत्युक्तन्यायेन सर्वे वेदांताः। ततश्च लक्षणप्रमाणयोः सत्वेन विष्णोः स्तोत्रकरणप्रतिज्ञा संघटते न किंचिदवद्यमिति भावः। ननु यद्यत्कारणं तत्तदन्यतो जन्यमिति व्याप्तेराकाशादौ दर्शनादाकाशादिकारणस्यापि विष्णोर्जन्यत्वानुमानेन जन्यसर्वोपादाननिमित्तत्वलक्षणं तस्मिन्ननुपपन्नं स्यादित्याशंक्य। "असंभवस्तु सतोऽनुपपत्तेः" इति न्यायेन तस्या जन्यत्वमाह अनादिमिति। आदिः कारणं न विद्यते यस्य सोऽनादिरजन्य इत्यर्थः। अयं भावः। किं ब्रह्मणो जडं कारणं उत चेतनम्। नाद्यः जडस्याकाशादेर्ब्रह्मकार्यत्वात्। नापि द्वितीयः। स्वस्य स्वकारणत्वानुपपत्तेश्चेतनांतराभावाच्च सत्वे वा तस्यापि कारणत्वेनान्यजन्यत्वानुमानेन चेतनानवस्थाप्रसंगात्। कस्यचिदजन्यत्वे वा तत्रैव कारणत्वहेतोर्व्यभिचारात्। तस्यैव ब्रह्मत्वांगीकारात्।

"स वा एष महानज आत्मा" इत्यजन्यत्वप्रतिपादकश्रुतिविरोधाच्च न तस्य जन्यत्वमिति जन्यसर्वोपादाननिमित्तत्वलक्षणमुपपन्नमिति । नन्वेवमपि स्तोत्रारंभो न युज्यते तस्य विषयप्रयोजनयोरभावात् । तथाहि । प्रत्यगभिन्नं ब्रह्मैव विषय इति भवतोऽभिमानः स चानुपपन्नः कर्तृत्वभोक्तृत्वप्रमातृत्वेन प्रतीयमानस्य प्रतीचः तद्रहितब्रह्मणाभेदानुपपत्तेः । ननु प्रतीच्यध्यस्ताहंकार एव कर्तृत्वादिनाऽनुभूयते न तु प्रत्यगात्मेति चेत् नाध्यासकारणाभावेन कर्तुरध्यस्तत्वानुपपत्तेः । किं जडे वस्तुनि कर्तुरध्यासः उत स्वप्रकाशे । नाद्यः कर्तुरभानप्रसंगात् । भवन्मते जडस्य सर्वस्याध्यस्तत्वेनाधिष्ठानत्वानुपपत्तेश्च । न द्वितीयः स्वप्रकाशकस्य वस्तुनः अज्ञानविषयत्वाभावेनाधिष्ठानत्वायोगात् । लोके अंशतोऽज्ञातस्यैव शुक्त्यादेरधिष्ठानत्वदर्शनात् । अस्य च सांशत्वानंगीकाराच्च । नहि प्रकाशमानस्याप्यज्ञानविषयत्वं संभवति । प्रकाशाप्रकाशयोर्विरोधात् ।

सादृश्यादेर्विषयदोषस्य स्वप्रकाशविषयप्रमितेरसंभवेन तत्करणप्रमाणदोषस्य चाभावाच्च । तस्मान्न कर्तुरध्यास इति तस्यैवात्मत्वात्तस्य बहुदोषवतो निर्दुष्टब्रह्मणाऽभेदायोगान्न विषयः संभवति । प्रयोजनमपि न संभवति । आत्मनि प्रतीयमानकर्तृत्वादेरनर्थस्य निवृत्तिर्हि प्रयोजनमिति वक्तव्यम् । तस्योक्तप्रकारेणानध्यस्तस्य ज्ञानान्निवृत्त्ययोगादित्याशंक्य तदुभयं प्रतिपादयन् स्तुतिमारभते । **यस्मिन्नित्यादिना** । यस्मिन्नज्ञाते विष्णौ अधिष्ठाने एतत् अनुभूयमानं संसृतिचक्रं संसरति अनया जीव इति संसृतिः अहंकारादिप्रपंचः स एव चक्रं भ्रमति प्रत्यहमाविर्भावतिरोभावाभ्यां च पुनःपुनरावर्तते । इत्थं कर्तृत्वादिप्रकारेण । अथवा संसृतिचक्रं अहंकारादिप्रपंचजातं कर्म जीवो भ्रमति । भ्रांत्या गृह्णातीत्यर्थः । अयमभिसंधिः । "आत्मा वा इदमेक एवाग्र आसीत् । सदेव सोम्येदमग्र आसीत् । सत्यं ज्ञानमनंतं ब्रह्म । क-

स्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति । अन्यत्र धर्मादन्यत्राधर्मात् । ब्रह्म ते ब्रवाणि । यत्साक्षादपरोक्षात् ब्रह्म । यो अशनायापिपासे शोकं मोहं जरामृत्युमत्येति । ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद । अथ योऽन्यां देवतामुपास्ते । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुते अथ तस्य भयं भवति । तत्त्वमसि । अहं ब्रह्मास्मि । अयमात्मा ब्रह्म । तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यम् " । इत्याद्याः श्रुतयो हि उपक्रमोपसंहारादिभिर्लिंगैस्तत्पराः संत्यः प्रत्यगात्मानमशनायाद्यतीतमपेतब्रह्मक्षत्रादिकं सच्चिदानंदात्मकं निर्विशेषं ब्रह्म भेदनिंदापूर्वकं बोधयन्ति । नच ताः प्रत्यक्षादिभिर्बाधितुं शक्यंते । बहुविधलिंगोपेततया तत्परत्वेन प्रबलत्वात् । किंतु ता एव प्रत्यक्षादितात्विकांशाद्नुपजीवकत्वात् । शुक्तिज्ञानवत्पश्चाद्भावित्वात् स्वप्रमेयबोधने प्रत्यक्षाद्यनुपजीव्य स्वप्रकाशचैतन्यविषय-

त्वात्। अनुमानापेक्षया प्रत्यक्षवत्। अव्यवहितवस्तुविषयत्वाच्च प्रत्यक्षादिकं बाधित्वा तात्त्विकांशात्प्रच्याव्य व्यावहारिकांशे व्यवस्थापयंति। ततश्च तादृशे आत्मनि कर्तृत्वादिप्रपंचस्य परमार्थतोऽसंभवेन सोऽध्यस्त एव। न च स्वप्रकाशस्याज्ञानविषयत्वाभावेनाधिष्ठानत्वायोगादध्यस्तत्वानुपपत्तिः। लोके घटमहं न जानामीति अज्ञानविशेषणतया भासमानस्यैव तद्विषयत्वदर्शनात्। स्वरूपचैतन्यस्य मामहं न जानामीत्यज्ञानसाधकतया सिद्धस्य तदविरोधित्वाद्वृत्त्यारूढस्यैव तस्य तद्विरोधित्वात् आत्मन्यारोपितांशभेदसत्वात्सादृश्यादेश्च आत्मनि ब्राह्मण्याद्यध्यारोपे संविदनित्यत्वाध्यारोपे चादर्शनात्। स्वप्रकाशस्य च स्वयमेव स्वस्मिन्प्रमाणत्वेन तन्निष्ठाविद्यायाः प्रमाणदोषस्य सत्वाच्च। ततश्च कर्तुरध्यस्तत्वेनानात्मत्वादात्मनश्च कर्तृत्वादिसाक्षिणो ब्रह्मत्वे बाधाभावात् ब्रह्मात्मैक्यं विषयः संभवति। एवं कर्तृत्वादेरनर्थस्यात्मन्यारोपितस्य समूलस्य निवृ-

त्तिः प्रयोजनमपि संभवतीत्याह । **यस्मिन् दृष्ट-इति** ॥ यस्मिन्सदानंदचित्प्रकाशे परिपूर्णे विष्णौ दृष्टे शांत्यादिसहितनिरंतरानुष्ठितश्रवणमनननिदिध्यासनैः सम्यक् साक्षात्कृते तत्संसृतिचक्रं समूलं नश्यति लीयते । तं हरिं ईडे इति संबंधः । अत्र उभयत्र श्रुतिः । "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादि । ननु अहंकारादिप्रपंचमूलाज्ञानस्य निवृत्तिर्न संभवति तस्यानध्यस्तत्वात् । स्वेनैव स्वस्याध्यासे आत्माश्रयात् । अज्ञानांतरांगीकारे चानवस्थाद्यापत्तेः । लोकेऽनध्यस्तस्य घटादेर्ज्ञानान्निवृत्त्यसंभवः । किंच भावरूपाज्ञानस्यानादिनो निवृत्तिर्न संभवति । अनादि भावस्यात्मवन्नित्यत्वनियमात् । परमाणुनिष्ठश्यामताया अनादित्वस्योभयवादिमतेऽनंगीकारात् । किंच अज्ञाननिवृत्तिः सती उतासती उत सदसती सदसद्विलक्षणा वा । आद्ये आत्मनो भिन्ना उता-

भिन्ना भिन्नाभिन्ना वा भिन्नाभिन्नविलक्षणा वा। नाद्यः द्वैतापत्तेः। न द्वितीयः आत्मनोऽनादित्वेनाविद्यानिवृत्तेर्ज्ञानसाध्यत्वानुपपत्तेः। नापि तृतीयः विरोधात्। अतएव न चतुर्थोऽपि। भिन्नाभिन्नत्वव्यतिरेकेण प्रकारांतराभावात्। नच प्रथमद्वितीयः। असत्वे शशशृंगतुल्यायास्तस्याः साध्यत्वाऽनुपपत्तेः। पुरुषार्थत्वाभावप्रसंगाच्च। नापि तृतीयः। विरोधात् उक्तपक्षद्वयदूषणापत्तेश्च। नच चतुर्थोऽपि। सदसद्विलक्षणत्वेऽनिर्वचनीयत्वेन तस्याः अज्ञानावस्थानप्रसंगात्। अनिर्वचनीयाज्ञाननिवृत्तेरनिर्वचनीयत्वानुपपत्तेश्च। नहि घटनिवृत्तिर्घटो भवति ततश्च सर्वथाप्यनुपपत्तेर्नाज्ञानस्य निवृत्तिः संभवतीत्याशंक्य। न तावदज्ञानस्य कल्पकाभावेनाकल्पिततयाऽज्ञाननिवृत्त्यसंभवः। दीपादिवत्तस्य स्वपरनिर्वाहकत्वात्तस्य स्वप्रकाशे आत्मनि वस्तुतोऽसंभवेन कल्पितत्वस्यैव वक्तुमुचितत्वात्। "अनृतेन हि प्रत्यूढाः। त इमे सत्याः कामा अनृतापि-

धानाः । नासदासीन्नो सदासीत्” इत्यादि श्रुतेश्च । नाप्यनादिभावत्वेन तस्य निवृत्त्यनुपपत्तिः । अनादिभावस्यानिवृत्तिरिति सामान्यव्याप्तेः ज्ञानेनाज्ञाननाश इत्यनुभवसिद्धविशेषव्याप्तिविरोधेन “तरति शोकमात्मवित् । भूयश्चांते विश्वमायानिवृत्तिः । निचाय्य तं मृत्युमुखात्प्रमुच्यते । ते ब्रह्मलोके तु परांतकाले” इत्यादि श्रुत्या । “ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । मामेव ये प्रपद्यंते मायामेतां तरंति ते । अहमज्ञानजं तमः नाशयामि । तरत्यविद्यां विततांहृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै ज्ञानात्मने नमः” इत्यादि स्मृत्या च । अज्ञानव्यतिरिक्तस्थले संकोचस्यैवोचितत्वात् । तस्यास्माभिर्भावत्वानंगीकारात् । अभावविलक्षणत्वमात्रेण भावत्वव्यपदेशाच्चेत्यभिप्रेत्याज्ञाननिवृत्तिः सद्रूपा आत्माभिन्ना चेत्याह । संसारध्वांतविनाशं हरिमिति । संसारस्य कर्तृत्वादिरूपस्य कारणं यत् ध्वांतमज्ञानं

तस्य विनाशं निवृत्तिरूपम्। हरिं वृत्त्यारूढं सत् अज्ञानविरोधि चैतन्यमित्यर्थः। न चात्माभिन्नाया अज्ञाननिवृत्तेर्ज्ञानसाध्यत्वानुपपत्तिः। यस्मिन्सति यस्याग्निमक्षणसंबंधः। असति यस्मिन्यस्याभावः। तत्तत्साध्यमिति साध्यलक्षणस्य ज्ञाने सति अज्ञाननिवृत्तिरूपात्मनः अग्रिमक्षणसंबंधः ज्ञानाभावेऽज्ञाननिवृत्त्यभावोऽज्ञानमिति। अज्ञाननिवृत्तिरूपात्मनि सत्वोपपत्तेर्भिन्नसत्ताकयोर्भावाभावयोर्विरोधाभावाच्च। नित्यसिद्धायामप्यज्ञाननिवृत्तौ साध्यत्वभ्रांत्या वा पुरुषप्रवृत्त्युपपत्तेश्च "प्रपंचोपशमं शिवम्" इत्यादि श्रुत्या तस्यात्माभेदसिद्धेश्च सर्वथाप्यज्ञाननिवृत्तिरूपप्रयोजनसंभवेन स्तोत्रारंभो युज्यत इति भावः। ईडे स्तौमीत्यर्थः॥ १॥

ननु ब्रह्म स्वस्मादन्यज्जगदारभते उत ब्रह्मैव जगज्जायते। नाद्यः। द्वैतापत्तेः। एकस्य निरवयवस्यारंभकत्वानुपपत्तेश्च। द्वितीये तु ब्रह्म सर्वात्मना जगदाकारं भवति एकदेशेन वा। नाद्यः। मुक्ता-

नां प्राप्यस्थलाभावप्रसंगात् । निष्प्रपंचब्रह्मण एव मुक्तप्राप्यत्वात् । न द्वितीयः ब्रह्मणो निरवयवत्वात् । सावयवत्वे चानित्यत्वप्रसंगात् । निष्कलमित्यादि श्रुतिविरोधाच्चेत्याशंक्य "निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः । तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतुर्हितैषिणी" इत्यादिन्यायेनोत्तरमाह ।

यस्यैकांशादित्थमशेषं जगदेतत्
प्रादुर्भूतं येन पिनद्धं पुनरित्थम् ॥
येन व्याप्तं येन विबुद्धं सुखदुःखै-
स्तं सं० ॥ २ ॥

यस्येति ॥ यस्य परमात्मन एकांशात् । एकदेशतुल्यात् मायावच्छिन्नात् । इत्थं भोक्तृभोग्याकारेणैतदनुभूयमानं जगत्प्रादुर्भूतमुत्पन्नमित्यर्थः । ब्रह्मणो वस्तुतो निरवयवत्वेऽपि मायावच्छेदेनानिर्वचनीयांशत्वात् । एकदेशादेवेदं जगदुत्पन्नम् । तथा च श्रुतिः । "पादोऽस्य विश्वा भूतानि त्रि-

पादस्यामृतं दिवि" इति । अस्याश्चायमर्थः । विश्वा भूतानि ब्रह्मांडात्मकं सकलमिदं जगदिति यावत् । अस्य ब्रह्मणः पादः अंश इत्यर्थः । त्रिपात् पादत्रयमस्य ब्रह्मणः अमृतं मोक्षरूपं दिवि स्वप्रकाशात्मनि स्वरूप एव वर्तते । न प्रपंचसंबंधस्तत्रास्तीत्यर्थः । ब्रह्मणः प्रपंचसंबंधरहितप्रदेशः । श्रीबादरायणेनापि सूत्रितः । "विकारावर्ति च तथाहि स्थितिमाहेति" । विकाररूपेणावर्तमानं ब्रह्मणो भागत्रयमस्ति । तथाहि । स्थितिमवस्थानं ब्रह्मण आह । उक्ता श्रुतिरिति सूत्रार्थः । तथाचोक्तप्रकारेण ब्रह्मणो जगदाकारेणावस्थानेऽपि न मुक्तप्राप्यस्थलाभावशंकेति भावः । एवं जगदुत्पत्तिं परमात्मन उक्त्वा तस्य जगत्स्थितिहेतुत्वमप्याह । **येन पिनद्धमिति** । पुनः पश्चाद्येन परमात्मना एतज्जगदित्थं वर्णाश्रमादिभेदेन पिनद्धं सुदृढं बद्धमित्यर्थः । तथाच श्रुतिः "एष सेतुर्विधरण एषां लोकानाम-

संभेदाय" इति । अस्याश्चायमर्थः । एष स वा एष महानज इत्युपक्रम्य सर्ववशित्वेन सर्वेश्वरत्वेन चोक्तः प्रकृतः परमात्मा सेतुरिव सेतुः । सेतुसाम्यमेवाह । एषां लोकानां भूरादिभेदेन देवतिर्यगादिमनुष्यभेदेन वर्णाश्रमादिभेदेन च भिन्नानां भूतानां चासंभेदायासांकर्याय विधरणः विधारयिता । यथा लौकिकसेतुः क्षेत्रसंपदां तत्रत्यजलानां चासांकर्याय विधारयिता तद्वदिति । **येन व्याप्तमिति ।** येन चाधिष्ठानभूतेन सर्वं जगदाकाशेनेव व्याप्तमंतर्बहिः पूर्णमित्यर्थः । तथाच श्रुतिः "यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति । सर्वव्यापकत्वे हेतुः । नारायण इति नरात्पुरुषाद्भुत्पन्नानि सर्वाणि जगंति नाराणि तेषामयनं अधिष्ठानमित्यर्थः । अन्यत्स्पष्टम् । ननु ब्रह्मणो जगत्कारणत्वं न युज्यते । वैषम्यनैर्घृण्यप्रसंगात् । कांश्चित्सुखिनो देवादीन्कांश्चिद्दुःखिनस्तिर्यगादीन्कांश्चिदुभयवतो म-

नुष्याश्च सृजन् ईश्वरो विषमः स्यात्। तथा प्रलयकालेऽविशेषेण सर्वान् जीवानुपसंहरन् निर्घृणश्च स्यादित्याशंक्य तत्प्राण्यनुष्ठितकर्मापेक्षयैवेश्वरस्य सृष्ट्यादौ प्रवृत्तेर्न वैषम्याद्यापत्तिरित्यभिप्रेत्याह। येन विबुद्धमिति। सुखदुःखैः सुखं पुत्रदारादिलाभादिजन्या सत्वपरिणामरूपानुकूलचित्तवृत्तिः। दुःखं रोगादिजन्या रजोविकाररूपा प्रतिकूलचित्तवृत्तिः। तदुभयविशिष्टं सकलं जगत् येन स्वप्रकाशचिद्रूपेण परमात्मना विबुद्धं प्रकाशितमित्यर्थः। तथा च श्रुतिः। "तस्य भासा सर्वमिदं विभाति" इति। तस्य सूर्याद्यविषयस्य ब्रह्मणः भासा स्वरूपचैतन्येनेत्यर्थः। अयं भावः। "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष एवासाधु कर्म कारयति तं यमधो निनीषते"। एभ्यो लोकेभ्यो नकरतिर्यगादिलोकेभ्य उन्निनीषते। उर्ध्वं गंधर्वादिब्रह्मांतानां पदं नेतुं इच्छति। अधस्तिर्यगादिस्थावरांतं नेतुमिच्छति इति श्रुत्या हि त-

त्तत्प्राण्यनुष्ठितकर्मापेक्षया तत्फलप्रदातृत्वं बोध्यते । न च पुण्ये पापे च स्वेच्छया प्रवर्तयत ईश्वरस्य पुनश्च वैषम्याद्यापत्तिरिति वाच्यम् । पूर्वपूर्वकर्मापेक्षयोत्तरोत्तरस्मिन्प्रवर्तयतस्तदापत्त्यभावात्संसारस्य चानादित्वात् सूत्रकारेण च तस्य वैषम्यादेरभावः सूचितः । वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति । न कर्माविभागादिति चेन्नानादित्वात् । ईश्वरस्य वैषम्यनैर्घृण्ये न संभवतः । सृष्ट्यादिप्राणिकर्मापेक्षत्वात् । तथाहि । एष ह्येवेत्युक्ता श्रुतिर्दर्शयतीति प्रथमसूत्रार्थः । ननु सृष्टेः पूर्वं कर्म नास्ति तदाऽविभागात्सर्वस्य ब्रह्ममात्रत्वादिति चेन्न । संसारस्यानादित्वात्सूक्ष्मतया प्रलये स्थितिसंभवाच्चेति द्वितीयसूत्रार्थः । तथाच ब्रह्मणो जगत्कारणत्वे न कोऽपि दोष इति ॥ २ ॥

ननु सुखदुःखमोहात्मकस्य वियदादिप्रपंचस्य जडस्य सुखदुःखमोहात्मकं सत्वरजस्तमोगुणात्मकं जडं प्रधानमेव कारणमनुमीयते चिन्मात्रस्य तु ब्रह्मणः

तादृशजगत्कारणत्वानुपपत्तेः । कार्यकारणयोर्वैलक्षण्यानुपपत्तेः । "आजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम्" इति श्रुतेः । अजां अजन्यां लोहितशुक्लकृष्णां रजःसत्वतमोरूपां सरूपां स्वसमानरूपां बह्वीं प्रजां प्रकर्षेण जायत इति प्रजा वियदादिप्रपंचस्तां इत्यर्थः इत्याशंक्याह–

सर्वज्ञो यो यश्च हि सर्वः सकलो यो
यश्चानंदोऽनंतगुणो यो गुणधामा ।
यश्चाव्यक्तो व्यस्तसमस्तः सदसद्य-
स्तं संसारध्वांतविनाशं हरि० ॥ ३ ॥

सर्वज्ञ इति ॥ यः सर्वज्ञः । अत्रश्रुतिः । "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" इत्यादि सामान्यतः सर्वं जानातीति सर्वज्ञः । विशेषेण सर्वं वेत्तीति सर्ववित् । यस्य ज्ञानमयं तपः । न तु जीवानामिव कृच्छ्रचांद्रायणादिरूपमिति श्रुतेरर्थः । प्रधानस्य जडत्वेन विविधकर्मफलरूपविविधविन्या-

सदेहादिप्रपंचरचनानुपपत्तेः । किं च । सुखादेर्बाह्यघटादिधर्मत्वासिद्धेरांतरस्यैव प्रतीतेः । अचेतनस्य स्वतो लोके प्रवृत्त्यदर्शनादजामित्यादिमंत्रस्य लोहितशुक्लकृष्णगुणवत्तेजोबन्नकारणपरमात्माध्यस्ताव्याकृतविषयत्वान्न प्रधानं जगत्कारणं बादरायणेनापि । "इक्षतेर्नाशब्दम् । रचनानुपपत्तेश्च नानुमानम्" इत्यादिना प्रधानस्य जगत्कारणत्वं प्रत्यषेधि । "तदैक्षत बहु स्यां प्रजायेय" इति श्रुत्या जगत्कारणस्य सत ईक्षतेः ईक्षणस्य श्रवणादशब्दं शब्दागम्यमनुमानगम्यं प्रधानं न कारणमिति प्रथमसूत्रार्थः । अनुमीयत इत्यनुमानं प्रधानं कारणं न भवति । तस्य जडत्वेन रचनानुपपत्तेर्देहादिप्रपंचकर्तृत्वानुपपत्तेरिति द्वितीयसूत्रार्थः । श्रुतिसिद्धसर्वज्ञस्य तु ब्रह्मणस्तत्संभवतीति भावः । यदुक्तं विलक्षणयोर्न कार्यकारणतेति तन्न । ऊर्णनाभेस्तंतोर्गोमयाद्वृश्चिकादेः पुरुषात्केशलोमादेश्च दर्शनादित्यभिप्रेत्याह । यश्च हि सर्व इति । "सर्वं खल्विदं ब्रह्म ।

इदं सर्वं यदयमात्मा" इत्यादि श्रुतेः। घटः सन् घटः स्फुरतीति सर्वस्य प्रपंचस्य सत्त्वेन स्फुरणत्वेन च ब्रह्मसालक्षण्यानुभवात्। "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवंति। यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम्" इत्यादि श्रुत्या विलक्षणकारणत्वे दृष्टांतप्रदर्शनाच्चेति भावः। नन्वचेतनस्य प्रधानस्य स्वतः सृष्ट्यादिप्रवृत्त्यसंभवेऽपि ईश्वराधिष्ठितस्य तस्य प्रवृत्त्या कारणत्वं भवतीति योगानां सेश्वरसांख्यानां वा मतमाशंक्याह। **सकलो य इति**। सकलः प्रकृतिरधिष्ठाता च स एव इत्यर्थः। सोऽकामयत बहुस्यां प्रजायेय इति स्वस्यैव बहुभवनकामनादर्शनात्तदात्मानं स्वयमकुरुतेति स्वात्मनः जगद्रूपेण कारणत्वश्रवणात्। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति। येनाश्रुतं श्रुतं भवति। आत्मनि खल्वरे दृष्टे इदं सर्वं विज्ञातं भवति" इत्यादि श्रुतेरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः प्रकृ-

त्यधिष्ठात्रोर्भेदे प्रकृतिज्ञानेनाधिष्ठातृज्ञानाभावेनोपरोधप्रसंगात् । श्रुतिसिद्धप्रकृत्यधिष्ठातृरूपस्येश्वरस्य तटस्थत्वमात्रत्वस्य लोकदृष्टसामान्यप्रसाधकेनानुमानेन सिद्ध्यसंभवाच्च स एव प्रकृतिरधिष्ठाता च । सूत्रकारोऽपि । "प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधात् साक्षाच्चोभयाम्नानात् । आत्मकृतेः परिणामात् । पत्युरसामंजस्यात्" । इतीश्वरस्य प्रकृत्यधिष्ठातृरूपत्वं निमित्तमात्रेश्वरस्याभावं चाह । सूत्राणामयमर्थः । प्रकृतिरुपादानं चकारादधिष्ठाता चेश्वर एवं सति प्रतिज्ञादृष्टांतयोरनुपरोधात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः । यथा सौम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्यात् इति प्रकृतिविषयदृष्टांतस्य चानुपरोधादुपपत्तेरिति साक्षान्मुखत एव "बहु स्यां प्रजायेय" इत्युभयाम्नानात् । प्रकृतित्वस्याधिष्ठातृत्वस्य चाम्नानादिति । आत्मकृतेः तदात्मानं स्वयमकुरुतेति आत्मन एव जगदाकारेण कारणत्वश्रवणात् । कथं कर्तृत्वेन पूर्वसिद्धस्य क्रियमाणत्वं तत्राह । परिणामादि-

ति । पूर्वसिद्धस्यापि विकारात्मना स्वात्मनः परिणामयितृत्वात् । पत्युर्न निमित्तमात्रभूतेश्वरस्यासामंजस्यादनुपपत्तेरिति । लोकदृष्टसामान्येनानुमितस्य लोकवदेव रागद्वेषादिप्रसक्त्या ईश्वरत्वानुपपत्तेरिति । ततश्च नेश्वराधिष्ठितं प्रधानमपि कारणमिति भावः । ननु स्वप्रयोजनरहिते जगत्सर्जनादौ प्रवृत्तस्येश्वरस्योन्मत्तवत्प्रेक्षाकारित्वाभावप्रसंगात् स्वप्रयोजनोद्देशेन च प्रवृत्तस्य नित्यतृप्तत्वव्याहतेश्च नेश्वरो जगत्स्रष्टेत्याशंक्याह । **यश्चानंद इति** । निरंतरभासमानानवच्छिन्नपरमानंदस्वरूपः । “आनंदो ब्रह्म विज्ञानमानंदं ब्रह्म एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति ” इत्यादि श्रुतेराप्तकामस्येश्वरस्य प्राप्तव्यवस्त्वभावान्न नित्यतृप्तत्वहानिरित्यर्थः । लोके सार्वभौमादेः प्रेक्षाकारिणः प्रयोजनोद्देशं विनापि मृगयादौ प्रवृत्तस्योन्मत्तत्वादर्शनात्प्राणिकर्मानुरोधेन जगत्सर्जनादौ प्रवृत्तेरीश्वरस्य स्वभावत्वात्स्वभावे च पर्यनुयोगाभावान्नोन्मत्त ईश्वरः । बादरायणोऽपि ।

"न प्रयोजनवत्त्वादिति" । अनेन सूत्रेण प्रवृत्ते-श्च लोके प्रयोजनवत्त्वादीश्वरस्य च तदभावान्न स्र-ष्टेत्याशंक्य "लोकवत्तु लीलाकैवल्यम्" । इत्य-नेन लोके राजादिवदीश्वरस्यापि लीलायाः जगत्स-र्जनादिरूपायाः कैवल्यं प्रयोजनराहित्यमुपपद्यते इति समादधे । तस्मादीश्वरः स्रष्टैवेति भावः । ननु-लोके कुलालादेः स्रष्टुः शरीरयुक्तस्य घटादिप्रयोज-नपरिज्ञानिनः बाह्यमृदाद्युपसंहारपूर्वकमेव सर्जने प्र-वृत्तिदर्शनाद्ब्रह्मणश्च निर्विकल्पस्याशरीरस्यात एवा-समर्थस्य सृष्टिप्रयोजनापरिज्ञानिनः स्वव्यतिरिक्तप-दार्थाभावेन बाह्यसाधनरहितस्य कथं स्रष्टृत्वमित्याशं-क्याह । **अनंतगुण इति** । अनंता असंख्याताः सर्वशक्तित्वसर्वज्ञत्वादयो गुणा धर्मा यस्य सः । तत्र हेतुमाह । **गुणधामेति** । शुद्धसत्वरूपा माया गुणधाम गृहमुपाधिर्यस्य स इत्यर्थः । बाह्यसाधना-भावेऽपि क्षीरादेर्दध्यादिहेतुत्वदर्शनाद्देवानां योगध-निनां च बाह्यसाधनं विना पुराणादौ योगमहिम्ना

सर्गादिदर्शनादस्माकं च शरीरांतरं विनापि शरीराधिष्ठातृत्वदर्शनात्। "पराऽस्य शक्तिर्विविधैव श्रूयते। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इत्यादावीश्वरस्य सर्वसाधनपटीयस्याः मायाशक्तेः श्रवणात्। सूत्रकारेण। उपसंहारदर्शनान्नेति चेन्न "क्षीरवद्धि। देवादिवदपि लोके। सर्वधर्मोपपत्तेश्च" इति सूत्रैः कुलालादेर्मृदाद्युपसंहारदर्शनादीश्वरस्य च बाह्यसाधनोपसंहाराभावान्न स स्रष्टा इत्याशंक्य बाह्यसाधानाभावेऽपि क्षीरस्य दधिहेतुत्ववत् लोके देवादिवच्च प्रपंचहेतुत्वोपपत्तेर्मायावशादेव सर्वेषां सर्वकर्तृत्वादिधर्माणामुपपत्तेश्च न कोऽपि दोष इति समाधानाच्चाशरीरस्यापि तस्य मायागुणवशादेव सर्वमुपपद्यत इति भावः। ननु तर्हि प्रसिद्धमायावीव किमिति न गृह्यत इत्याशंक्याह। यश्चाव्यक्त इति। अनिंद्रियग्राह्य इत्यर्थः "अचिंत्यमव्यक्तम्" इत्यादि श्रुतेः "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगंधवच्च यत्"

इत्यादि श्रुत्या च रूपाद्यभावान्नेंद्रियग्राह्यः । किंतु स श्रुत्यैकगम्य इति भावः। ननु ब्रह्मण एव सकलजगदाकारत्वे भोक्तृभोग्यविभागो न स्यात् सर्वस्यापि ब्रह्मकारणकत्वाविशेषादित्याशंक्याह । **व्यस्तसमस्त इति**। व्यस्तो भोक्तृभोग्यरूपेण विभक्तो यः समस्तः प्रपंचस्तद्रूप इत्यर्थः। लोके यथा समुद्रादेरेकस्यैव फेनतरंगबुद्बुदरूपेण विभक्तानेककार्यहेतुत्वं तद्वदेकस्यापि ब्रह्मणः विभक्तानेककार्यहेतुत्वं संभवति । अत्र सूत्रम् । "भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदिति" । अस्य चायमर्थः । भोक्तुर्भोग्यत्वापत्तेर्भोग्यस्य च भोक्तृत्वापत्तेरविभागः विभागाभावः स्यादिति चेन्न लोकवत् समुद्रवत् विभागोपपत्तेरिति। ततश्च ब्रह्मैव सर्वकारणमिति भावः । ब्रह्मण एव सत्यानृतभोग्यरूपेणावस्थानमाह। **सदसच्च इति** । सत्सत्यमसदसत्यम्। "सत्यं चानृतं च सत्यमभवत्" इति श्रुतेः एकं सत्यपदं ब्रह्मपरं अपरं व्यावहारिकसत्यवियदादिपरम् । अनृतं शुक्तिरजतादि ॥ ३ ॥

ननु कार्यं स्वन्यूनपरिमाणद्रव्यारब्धं कार्यत्वात्पटादिवदित्यनुमानात्सर्वस्य कार्यस्य स्वन्यूनपरिमाणद्रव्यारब्धत्वनियमात्परंपरया परमाणव एव जगदुपादानं नतु ब्रह्म तस्य विभुत्वादित्याशंक्याह ।

यस्मादन्यन्नास्त्यपि नैवं परमार्थं
दृश्यादन्यो निर्विषयज्ञानमयत्वात् ॥
ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञ-
स्तं संसारध्वांतविनाशं हरि० ॥ ४ ॥

यस्मादिति । यस्मात्सच्चिदानंदस्वरूपाद्विष्णोरन्यत्परमाण्वादि नास्ति "एकमेवाद्वितीयं यस्मात्परं नापरमस्ति किंचित्" इत्यादि श्रुतेरित्यर्थः । अनुमानस्य दीर्घविस्तृतक्षौमद्वयारब्धरज्ज्वां व्यभिचारादागमबाधितत्वाच्चेति भावः । ब्रह्म परमार्थतो जगदाकारेण परिणमत इति भास्करमतमाशंक्य निराकरोति । अपि नैवं परमार्थमिति । एवं वियदादि जगदाकारेणावस्थानं न परमार्थं न वास्तवमित्यर्थः । "नि-

ष्कलं निष्क्रियम्" इत्यादिना श्रुत्या निरवयवब्रह्मणोंऽशतो जगद्रूपपरिणामानुपपत्तेः । सर्वात्मना च परिणामे ब्रह्माभावप्रसंगात् पुनः प्रलयकाले सच्चिदानंदाकारेण परिणामे च ब्रह्मणोऽनित्यत्वप्रसंगात्समुद्रादेश्च सावयवत्वेनांशतः फेनादिपरिणामेऽप्यवस्थितिसंभवाच्च । न ब्रह्मणो जगदाकारेणावस्थानं वास्तवम् । सूत्रकारोऽपि "कृत्स्नप्रसक्तिनिरवयवत्वशब्दकोपो वेति" परिणामवादमदूषयत् । स्पष्टोऽर्थः "तदनन्यत्वमारंभणशब्दादिभ्य इति" । विवर्तवादं चांगीचकार तदनन्यत्वं परमार्थतः प्रपंचतद्व्यतिरेकेणाभाव एव आरंभणशब्दादिभ्यः "वाचारंभणं विकारो नामधेयम्" इत्यादि श्रुतिभ्य इतितस्यार्थः । ततो जगतो मिथ्यात्वान्न जगत्कारणत्वं ब्रह्मणो वास्तवमिति भावः । ननु सर्वैः परिदृश्यमानस्य जगतः कथं मिथ्यात्वं दृश्यत्वादेव शुक्तिरूप्यादिवज्जगतो मिथ्यात्वमिति चेत्तर्हि ब्रह्मणोऽपि दृश्यत्वान्मिथ्यात्वापत्तिरित्याशंक्याह । दृश्याद-

न्य इति। दृश्याच्चैतन्यविषयादन्यो विष्णुरिति शेषः। "अदृष्टो द्रष्टा" इत्यादि श्रुतेरित्यर्थः। दृश्यादन्यत्वे हेतुमाह। **निर्विषयज्ञानमयत्वादिति।** विषयानपेक्षविज्ञानस्वभावत्वादित्यर्थः। विज्ञानघनः" इत्यादि श्रुतेः। कूटस्थज्ञानमात्रस्वरूपस्य कथं सर्वज्ञत्वमित्याशंक्याह। **ज्ञातृज्ञानेत्यादिना।** ज्ञातृज्ञानज्ञेयविहीनोऽपि ज्ञाता ज्ञानाश्रयः ज्ञानमविद्याया अंतःकरणस्य वा परिणामविशेषः ज्ञेयं वियदादि वस्तु तद्रहितोऽपि अविद्याद्युपहितः सन् सदा ज्ञः ज्ञाता "स वेत्ति वेद्यं न च तस्यास्ति वेत्ता" इत्यादि श्रुतेरित्यर्थः। तस्माज्जगतो मिथ्यात्वाद्ब्रह्मणो जगत्कारणत्वमवास्तवं तटस्थं तदुपलक्षणं न तु विशेषणमिति सिद्धम् ॥ ४ ॥

एवं केवलतार्किकानवग्राह्यं श्रौतं जगत्कारणं विष्णुं स्तुत्वा इदानीं भक्त्यादिसाधनसंपन्नैर्गुरुशुश्रूषापरायणैरेवावग्राह्यं तत्त्वं स्तोतुमारभते।

आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वा
वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना ।
भक्त्यैकाग्रध्यानपरा यं विदुरीशं
तं संसारध्वांतविनाशं हरि० ॥ ५ ॥

यमीशं विदुः साक्षादनुभवंति तमिति संबंधः । कीदृशाऽधिकारिणो विदुस्तत्राह । **आचार्येभ्य इति** ॥ करतलामलकवत्सम्यक्प्रत्यक्षीकृतब्रह्मतत्त्वेभ्यः सर्वकर्मसंन्यासेन समिदाद्युपहारपूर्वकं विधिवत्स्वैरुपसन्नेभ्यः शांतेभ्यः केवलं शिष्यकृपयैव तद्बोधने प्रवर्तमानेभ्यो गुरुभ्यः सकाशाल्लब्धं प्रथमज्ञातं सुसूक्ष्ममच्युतस्य च्युतरहितस्य कूटस्थनित्यस्य श्रीविष्णोस्तत्त्वं यैस्ते लब्धसुसूक्ष्माच्युततत्त्वाः "आचार्यवान्पुरुषो वेद । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ" इत्यादि श्रुतेः । हे प्रेष्ठ नचिकेतः । एषा ब्रह्मविषया

मतिस्तर्केण शुष्कतर्केण मूलप्रमाणरहितेन नापनेया प्रापणीया न भवति। किंतु अन्येन सर्वज्ञेन गुरुणा प्रोक्ता प्रकर्षेण युक्तिदृष्टांतपूर्वकमुक्ता उपदिष्टा सुज्ञानाय सम्यक्‌ब्रह्मविषयाऽविद्यानिवृत्तये भवतीति कठश्रुतेरर्थः। "तद्विद्धि प्रणिपातेन" इत्यादि स्मृतेश्च प्रथमज्ञानेन साकल्येनासंभावनानिवृत्त्यसंभवपक्षे साधनांतरमप्याह। वैराग्येणेत्यादिना। वैराग्येण विषयदोषविवेकेनोत्पन्नेन। "ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः" इत्युक्तपराकाष्ठामापन्नेन विषयविक्षेपरहितकृतो यो निरंतरोऽभ्यासः श्रवणावृत्तिः तेन यद्बलं मननं तेन च। "बाल्ये न तिष्ठासेत्" इत्यत्र तथैव व्याख्यानात्। ताभ्यां द्रढिम्ना सुदृढया भक्त्याऽहं ब्रह्मास्मीत्येकत्वेन या भक्तिर्भजनं तया। एकाग्रध्यानपराः। प्रत्यगभिन्नब्रह्मैक्यविषयध्याननिष्ठाः संतो यं विदुरित्यर्थः "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यः। तस्यैष

आत्मा विवृणुते तनूं स्वाम् । नायमात्मा बलहीनेन लभ्यः । ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति मुंडकश्रुतेः । प्रवचनमध्यापनं मेधा ग्रंथार्थधारणसामर्थ्यं श्रुतमनात्मविषयं बहुधा विवक्षितम् । एतैर्न लभ्यः । किंतु एष साधको यं परमात्मानमेव श्रवणादिभिर्निरंतरं प्रार्थयते । तेनायमात्मालभ्यः । तस्यैवं प्रार्थयमानस्यैष आत्मा स्वां तनूं सच्चिदानंदात्मिकां विवृणुते प्रकाशयतीत्यर्थः । बलहीनेन तद्विषयमननमकुर्वाणेनेत्यर्थः । निष्कलं निरवयवं परमानंदं निरंतरं ध्यायमानः प्रत्ययसंतत्या विषयीकुर्वन्पुरुषः । तत एव ध्यानात्तं पश्यते । अप्रतिबंधेन साक्षात्करोतीत्यर्थः । तदुक्तं भगवता "अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते । भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः" इति ॥ ५ ॥

एकाग्रध्यानपरा विद्वुरित्युक्तं केन क्रमेण केन प्रकारेण च ते विद्वुरित्याकांक्षायामाह ।

प्राणानायम्योमिति चित्तं हृदि रुध्वा
नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य ॥
क्षीणे चित्ते भाद्दशिरस्मीति विदुर्यं
तं संसारध्वांतविनाशं० ॥ ६ ॥

प्राणानिति ॥ प्राणान्वागादींद्रियाणि आयम्य उपसंहृत्य अनंतरमोमिति लपंत एव चित्तमंतःकरणं हृदि हृदयाकाशे ब्रह्मणि रुध्वा निरुध्य। "ओमित्यात्मानं युंजीत ओमित्येवं ध्यायथ आत्मानम्" इति श्रुतेः। आत्मानं चित्तं युंजीत निरुंध्यादित्यर्थः। "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्" इत्यादि स्मृतेश्च। अथ वा ओमिति उच्यमाने ओंकारवाच्ये हृदि हृदयाकाशे चित्तं रुध्वा अन्यत् रूपरसादि न स्मृत्वा प्राप्तामपि विषयस्मृतिं विषयदोषदर्शनेन हित्वा। "संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः। मनसैवेंद्रियग्रामं विनियम्य समंततः। शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया। आत्मसंस्थं मनः कृत्वा

न किंचिदपि चिंतयेत् । यतो यतो निश्चरति मनश्चंचलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्" इति स्मृतेः । पुनः पश्चात्तद्ब्रह्मास्मीत्यभ्यासव्यग्रं चित्तमत्रैव ब्रह्मात्मन्येव विलाप्य विलयं प्रापय्य । चित्ते क्षीणे लीने सति ध्यानव्यापाराडुपरते सति ।

**भाद्दशिरस्मीति** । स्वप्रकाशचिद्रूपः परमात्मास्मीति यं विष्णुं विदुरित्यर्थः । तदुक्तं भारतीतीर्थैः । "निर्गुणोपासनं पक्कं समाधिः स्याच्छनैस्ततः । यः समाधिनिरोधाख्यः सोऽनायासेन लभ्यते । निरोधलाभे पुंसोंऽतरसंगं वस्तु शिष्यते । पुनःपुनर्वासितेऽस्मिन्वाक्याज्जायेत तत्त्वधीः" इति । श्रुतिश्च । "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छांत आत्मनि" इति । अस्याश्चायमर्थः । प्राज्ञो विवेकी मुमुक्षुः पुरुषः वाक् वाचं मनसि नियच्छेन्निरुंध्यात् । वाग्ग्रहणं सर्वेषामिंद्रियाणामुपलक्षणम् । प्रथमं वागादींद्रियव्यापारं विहाय मनोमात्रव्यापारेणावतिष्ठेतेत्यर्थः । तन्मनः ज्ञान

आत्मनि देहेंद्रियादिव्यापारसाक्षिणि चित्प्रकाशे आत्मनि यच्छेत् । मनआदिष्वात्मबुद्धिं विहाय तत्साक्षिचैतन्ये एवात्मबुद्धिं कुर्यादित्यर्थः । तदुक्तमाचार्यैः "सत्यानंदस्वरूपं धीसाक्षिणं ज्ञानविग्रहम् । चिंतयात्मतया नित्यं त्यक्त्वा देहादिगां धियम्" इति । ज्ञानं मनआदिसाक्षिचैतन्यं च महति देशकालादिपरिच्छेदशून्ये आत्मनि ब्रह्मणि नियच्छेत् निरुंध्यात् एकीकुर्यादित्यर्थः । तत्तं महांतं आत्मानं साक्षित्वब्रह्मत्वविकल्पत्यागपूर्वकं शांते सर्वव्यापारातीते । "अन्यत्र धर्मादन्यत्राधर्मात्" इत्यादिना प्रक्रांते आत्मनि नियच्छेत् । अहं ब्रह्मास्मीति वृत्त्युल्लेखं त्यक्त्वा स्वतः प्रकाशमानपरमानंदपरिपूर्णब्रह्मात्मना अवतिष्ठेतेत्यर्थः । तदुक्तं । "दर्शनादर्शने हित्वा स्वयं केवलरूपतः । यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित्स्वयम्" इति पराशरंप्रति वसिष्ठेन ॥ ६ ॥

"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।"
तं परमात्मानं विज्ञाय विशेषेण ज्ञात्वा धीरः धीमान्

विषयानाकृष्टचित्तो वा प्रज्ञां प्रत्ययसंततिं कुर्यात् । "अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् । ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना" इत्यादि श्रुतिस्मृतयोऽपि इममर्थं वदंतीत्याह ।

यं ब्रह्माख्यं देवमनन्यं परिपूर्णं
हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम् ॥
ध्यात्वात्मस्थं ब्रह्मविदो यं विदुरीशं
तं संसारध्वांत विनाशं० ॥ ७ ॥

यमिति ॥ देवं स्वप्रकाशम् । "अत्रायं पुरुषः स्वयंज्योतिः" इति श्रुतेः । अनन्यं अन्यवस्तुशून्यम् । "यस्मात्परं नापरम्" इति श्रुतेः । परिपूर्णं परितः सर्वेषु देशेषु कालेषु च वर्तमानम् "ब्रह्मैवेदममृतं पुरस्तात्पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण अधश्चोर्ध्वं च प्रसृतम्" इति श्रुतेः । "स एवाद्य स उ श्वः" इत्यादि श्रुतेश्च । अत एव त्रिविधपरिच्छेदशून्यतया ब्र-

ह्माख्यं ब्रह्मेत्याख्या अभिधा यस्य तम् । भक्तैर्निरंतरं श्रवणादिना आत्मानं भजमानैः पुरुषैर्लभ्यं प्रापणीयम् " तं सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः " इति श्रुतेः । श्रवणादिभिर्युक्तः नियत आत्मा चित्तं येषामित्यर्थः । अजं जन्मरहितम् " महानजः " इत्यादिश्रुतेः । सूक्ष्मं इंद्रियाग्राह्यम् " सूक्ष्मात्सूक्ष्मतरम् " इत्यादि श्रुतेः । अतर्क्यम् । केवलतर्कागम्यं किंतु उपनिषद्गम्यम् " तं त्वौपनिषदम् " इत्यादि श्रुतेः । आत्मस्थम् । आत्मनि कार्यकारणसंघाते जीवत्वेन प्रविश्य स्थितम् "तदेवानुप्राविशत् । अनेन जीवेनात्मनानुप्रविश्य " इत्यादि श्रुतेः । एवंभूतं विष्णुं ध्यात्वा ब्रह्मविदो भवंति । यं च हृत्स्थं सर्वप्राणिनां हृदयेऽतर्यामितया स्थितमीशं विदुः । तत्र च श्रुतिः । " अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य" इत्यादिना हृदयोपाधिना अंगुष्ठमात्रः स्वतः पुरुषः पूर्णः । मध्ये देहमध्ये आत्मनि हृदय इत्यर्थः ॥७॥

एवं तावद्भक्त्यादिसाधनसंपन्नैरेवावग्राह्यं तत्त्वं

स्तुत्वा अधुना तत्त्वं पदार्थविवेकसंपन्नैरेवावग्राह्यं विष्णुं स्तोतुमुपक्रमते ।

मात्रातीतं स्वात्मविकाशात्मविबोधं
ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम् ॥
भावग्राह्यानंदमनन्यं च विदुर्यं तं
संसारध्वांतविनाशं हरि० ॥ ८ ॥

मात्रेति ॥ मीयंते अर्था आभिरिति मात्राश्चक्षुराद्यास्ताभ्योऽतीतं चक्षुराद्यग्राह्यमित्यर्थः । अत्र श्रुतिः "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा" इति । अन्यैर्वाक्चक्षुर्भ्यामिंद्रियैस्तपसा कृच्छ्रचांद्रायणादिना कर्मणा अग्निष्टोमादिना च न गृह्यते ज्ञातुं न शक्यते । रूपजात्यादिराहित्यादित्यर्थः । तर्हि चक्षुरादिनाऽग्रहणान्नास्त्येवेति न वाच्यमित्याह । स्वात्मविकाशात्मविबोधमिति । स्वस्य प्रतीच आत्मा स्वरूपं तस्माद्विकाशोऽभिव्य-

क्तिर्यस्य तस्मिन्नात्मनि अंतःकरणे विबोधो विशेषबोधो यस्य स तथोक्तः। तर्हि बुद्धिग्राह्यमिति प्राप्तं नेत्याह। **ज्ञेयातीतमिति**। ज्ञेयं ज्ञानविषयं वस्तु अतीत्य वर्तमानम्। नहि ज्ञेयातीतं ज्ञेयं भवति "अन्यदेव तद्विदितात् अप्रमेयमनादिं च" इत्यादि श्रुतेः। विदिताद्वेदनविषयात्। अप्रमेयं प्रमाया बुद्धिवृत्तेर्विषयो न भवतीत्यर्थः। अत्र हेतुमाह। **ज्ञानमयमिति**। ज्ञानस्वरूपमित्यर्थः "सत्यं ज्ञानमनंतं ब्रह्म" इत्यादि श्रुतेः। ननु तर्हि ज्ञेयातीतस्य कथमंतःकरणे विशेषबोध इत्याशंक्याह। **हृद्युपलभ्यमिति**। हृदि बुद्धौ भास्यातीतस्यापि सूर्यस्य आदर्शे स्फुटं प्रतिबिंबतया भानवत् ज्ञेयातीतस्यापि विष्णोः बुद्धौ स्फुटं प्रतिबिंबतया स्वतः स्फुरणं संभवति। तथाच श्रुतिः "मनसैवेदमाप्तव्यं एषोऽणुरात्मा चेतसा वेदितव्यः दृश्यते त्वग्र्या बुद्ध्या" इत्यादिना। न चैषु वाक्येषु आत्मनो बुद्धिग्राह्यत्वं प्रतीयते इति वाच्यम् "अप्रा-

ध्यं मनसा सह । न मतेर्मंतारं मन्वीथाः । न विज्ञातेर्विज्ञातारं विजानीयाः । "मनसैवेदमाप्तव्यम् । यन्मनसा न मनुते येनाहुर्मनोमतम्" इत्यादि श्रुतिविरोधप्रसंगात् । कस्तर्हि श्रुतिद्वयस्य परस्पराविरोधार्थ इति चेच्छृणु । मनसैवेदमाप्तव्यम् इत्यादेरात्मनो वृत्तिव्याप्यत्वं विवक्षितम् । अप्रमेयमित्यादि श्रुत्या फलव्याप्यत्वं निषिध्यते । आत्मनो वृत्तिव्याप्यत्वं नाम अंतःकरणवृत्तौ प्रतिबिंबतया स्वत एव स्फुटं भासमानत्वम् । फलव्याप्यत्वं फलेन तद्गतचिदाभासेन भास्यत्वम् । तथा च न श्रुतिद्वयविरोधः । तदुक्तं भारतीतीर्थैः । "स्वप्रकाशोऽपि साक्ष्येष धीवृत्त्या व्याप्यतेऽन्यवत् । फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् । अप्रमेयमनादिं चेत्यत्र श्रुत्येदमीरितम् । मनसैवेदमाप्तव्यमिति धीव्याप्यता श्रुता" इति । अतोऽविषयस्यापि बोधः संभवतीति भावः । "योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुषः" इत्याद्यवांतरवाक्येन देहादिव्यतिरिक्तत्वेन "अत्रायं पुरुषः स्व-

यंज्योतिर्भवति" इत्यादिना स्वयंज्योतिष्ट्वेन "असंगो ह्ययं पुरुषः" इत्यादिना च असंगत्वेन। यद्वैतन्न न पश्यतीत्यादिना अलुप्तचित्त्वेन प्रतिपाद्यमानं त्वंपदार्थं हृद्युपलभ्यं यं विदुरिति संबंधः। तत्पदार्थमाह। **भावग्राह्यानंदमिति**। भावरूपेण ग्राह्यश्चासावानंदश्चासौ भावग्राह्यानंदस्तम् "युवा स्यात् साधुयुवाध्यापकः" इत्यादिना सार्वभौममुपक्रम्य मनुष्यगंधर्वादिस्थानेषु उत्कर्षेण श्रूयमाण आनंदः यत्र काष्ठां प्राप्तः सोऽस्तिनिरतिशयानंदः। "यतो वाचो निवर्तंते अप्राप्य मनसा सह। आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति वाङ्मनसोऽगोचरत्वेन श्रूयमाण इत्येवं भावग्राह्यानंदमित्यर्थः। **अनन्यम्**। अन्यत् द्वितीयं यस्मान्न सोऽनन्यः। तमद्वितीयं निरतिशयानंदं तत्पदार्थमित्यर्थः॥ ८॥

ननु ब्रह्मणोऽनन्यत्वं कथं द्वितीयस्यान्यस्य घटादेरनुभवादित्याशंक्य सर्वस्यापि द्वितीयस्य दृश्यत्वेन शुक्तिरजतादिवत्तस्मिन्नारोपितत्वात्। आरोपितस्य

च परमार्थभूताधिष्ठानमात्रत्वात् । " सर्वं खल्विदं ब्रह्म आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वं इदं सर्वं यदयमात्मा पुरुष एवेदं सर्वं विश्वम्" इत्यादि श्रुतेश्च न ब्रह्मणोऽनन्यपदोक्ताद्द्वितीयत्वक्षितिरित्यभिप्रेत्याह ।

यद्यद्वेद्यं वस्तुसतत्वं विषयाख्यं
तत्तद्ब्रह्मैवेति विदित्वा तदहं च ॥
ध्यायंत्येवं यं सनकाद्या मुनयोऽजं
तं संसारध्वांतविनाशं हरि० ॥ ९ ॥

यद्यदिति ॥ यद्यविषयाख्यम् । विषिणोति विशेषेण पुरुषं बध्नातीति विषयः शब्दादिः तद्विषयाख्यं वस्तुसतत्वं वस्तुपरमार्थभूतं ब्रह्मैव सतत्वं स्वरूपं यस्य तस्मिन्विषयाख्यस्य सर्वस्यारोपितत्वादित्यर्थः । तत्र हेतुत्वाभिप्रायेणाह वेद्यमिति । वेद्यं दृश्यं दृश्यत्वात् तस्मिन्नारोपितत्वेन विषयाख्यं वस्तुसतत्वमित्यर्थः । अतस्तद्ब्रह्मैव न ततोऽतिरिक्तमिति विदित्वा ज्ञात्वा तद्ब्रह्माहम् । चकाराद्व्यत्ययेनाहं ब्रह्मेति च ।

एवं उक्तप्रकारेण यमजं परमात्मानं हरिं सनकाद्याः सनकसनंदनसनत्कुमारसनातनप्रभृतयः । मुनयः मननशीलाः ध्यायंति तं हरिं ईडे ॥ ९ ॥

नन्वहंप्रत्ययविषय आत्मा प्रसिद्धः । तस्य कथं ज्ञेयातीतत्वसंभावनेत्याशंक्याह ।

यद्यद्वेद्यं तत्तदहं नेति विहाय
स्वात्मज्योतिर्ज्ञानमयानंदमवाप्य ॥
तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं
तं संसारध्वांतविनाशं हरि० ॥१०॥

यद्यद्वेद्यमिति । देहाद्यहंकारपर्यंतं तत्तदहं आत्मा न भवामीति विहाय त्यक्त्वा वेद्यस्य च घटादिवदनात्मत्वेन व्याप्यत्वात् अहंकारादि च वेद्यत्वात् आत्मा न भवतीति हित्वेत्यर्थः । अयं भावः आत्मा अहंप्रत्ययविषयः इति वदन् वादी प्रष्टव्यः । किमात्मस्वरूपाहंप्रत्ययविषयः उत आत्मनिष्ठाहंप्रत्ययविषयः । नाद्यः । स्वस्य स्वकर्मत्वा-

नुपपत्तेः । द्वितीयेऽपि किमात्मनिष्ठप्रत्ययो जडः । उत स्वप्रकाशः । नाद्यः । जडेनात्मभानानुपपत्तेः । न द्वितीयः । स्वप्रकाशप्रत्ययविषयस्य घटादिवदात्मत्वायोगात् । नच स्वप्रकाशप्रत्ययस्याधारतयैव विषयत्वमंतरेणात्मा भासत इति वाच्यम् । प्रत्ययव्यतिरिक्तस्य प्रत्ययाधीनप्रकाशस्य प्रत्ययविषयत्वनियमेनात्मनोऽनात्मत्वदोषतादवस्थ्यात्तस्माद्यो यः प्रत्ययविषयोऽहंकारादिर्देहांतः सः सोऽनात्मेति । किं च यद्यद्वेद्यं तत्तत्स्वविलक्षणवेद्यमिति व्याप्तिदर्शनात् । स्वप्रकाश आत्मेति निश्चीयत इत्याह **स्वात्मेति** । स्वात्मज्योतिर्ज्ञानमयानंदं स्वात्मज्योतिः स्वप्रकाशो ज्ञानमयः ज्ञानस्वरूपो य आनंदः तं अवाप्य परप्रेमास्पदत्वेन संभाव्य तस्मिन्संभाविते अहंपदलक्ष्ये । अस्मीत्यात्मविदः अस्मीत्यात्मवेदनं कुर्वंतः । यमीशं ईशपदलक्ष्यं ब्रह्म विदुः साक्षादनुभवंतीत्यर्थः । त्वंपदलक्ष्यज्ञानं विना तस्य ब्रह्मत्वपरिज्ञानासंभवादिति भावः । तथाच श्रुतिः । " त्रिषु धामसु

यद्भोग्यं भोक्ता भोगश्च यद्भवेत्। तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः" अत्र हि श्रुतौ भोग्यं स्थूलप्रविविक्तआनंदेभ्यो भोक्तृविश्वतैजसप्राज्ञेभ्यः उपाधियुक्तेभ्यो विलक्षणः। सर्वस्य भासको यश्चिन्मात्रोऽहंपदलक्ष्य इत्यहंपदलक्ष्यं साक्षात्कृतमनूद्य तस्य सदाशिवशब्दलक्ष्याद्वयानंदब्रह्मत्वं बोध्यते। त्वंपदलक्ष्यार्थमसाक्षात्कुर्वतस्तस्य ब्रह्मत्वसाक्षात्कारासंभवात्॥ १०॥

नन्वेवं देहादिविलक्षणमात्मानं तस्य ब्रह्मत्वं च जानतामपि केषांचिन्मुक्त्यभावः। पुनरपि देहादावात्मबुद्धिश्च दृश्यतेऽतो देहादिव्यतिरिक्तात्मज्ञानं निष्फलमित्याशंक्य तेषामप्रतिबद्धात्मज्ञानाभावादेव मुक्त्यभावः न तु ज्ञानस्य तदसाधनत्वेन। प्रतिबंधश्चाऽसत्यप्रपंचानात्मदेहादिषु सत्यत्वात्मत्वबुद्धिः पूर्वपूर्ववासनया प्राप्ता प्रपंचदेहादिषु असत्यत्वानात्मत्वभावनयात्मनश्चिद्रूपत्वभावनया च दीर्घकालनैरंतर्यसत्काराभ्यस्तया निवर्तते निवृत्ते तस्मिन्ज्ञाने-

नाज्ञाने नष्टे ते सर्वे ब्रह्मैव भवंतीत्याशयेनाह ।

हित्वा हित्वा दृश्यमशेषं सविकल्पं
मत्वा शिष्टं भादृशिमात्रं गगनाभम्॥
त्यक्त्वा देहं यं प्रविशंत्यच्युतभक्ता-
स्तं संसारध्वांतविनाशं० ॥ ११ ॥

हित्वेति ॥ दृश्यं दृशो गोचरं सविकल्पं घटत्वपटत्वब्राह्मण्यादिविकल्पसहितम् । सर्वमेव बाह्यमभ्यंतरं च प्रपंचं हित्वा असत्यत्वेनाऽनात्मत्वेन च भावनया निरस्य देहादेरनात्मत्वं जगतो मिथ्यात्वं वासयित्वेत्यर्थः । तदुक्तं भारतीतीर्थैः । "आत्मा देहादिभिन्नोऽयं मिथ्या चेदं जगत्तयोः । देहाद्यात्मत्वसत्यत्वधीर्विपर्ययभावना ॥ तत्त्वभावनया नश्येत्साऽतो देहातिरिक्तताम् । आत्मनो भावयेत्तद्वन्मिथ्यात्वं जगतोऽनिशम्" इति । शिष्टं परिशिष्टम् । भादृशिमात्रं स्वप्रकाशचिन्मात्रम् । स्वच्छत्वासंगत्वविभुत्वादिभिर्गगनोपमं मत्वा आत्मत्वेन ज्ञात्वा । त-

दुक्तं विद्यारण्यगुरुभिः । "पंचकोशपरित्यागे साक्षिबोधावशेषतः । स्वस्वरूपं स एव स्याच्छून्यत्वं तस्य दुर्घटमिति । ततः देहं त्यक्त्वा आत्मत्वेनानभिमत्य । यं विष्णुं प्रविशंति । तत्र प्रवेशस्तदात्मतयाऽवस्थानमेव मुख्यप्रवेशस्यासंभवात् । "ब्रह्मवित् ब्रह्मैव भवति" इत्यादि श्रुतेः । अच्युतभक्ताः । अच्युते च्युतिरहिते अविनाशिनि ब्रह्मणि आत्मत्वेन या भक्तिर्भजनं तद्युक्ता इत्यर्थः । "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद" इत्यादि श्रुतेः ॥ ११ ॥

अस्तिहि बृहदारण्यके पंचमाध्याये आख्यायिका जनको ह वै बहुदक्षिणं यज्ञमारभत । तत्र च नानादेशेभ्यो ब्राह्मणाः ब्रह्मविदो यज्ञदिदृक्षया धनादिलिप्सया च समागताः अभिसंगता बभूवुः । तत्र च ब्रह्मवित्संघदर्शनेन जनकस्य जिज्ञासा बभूव । स च तेषां ब्रह्मविदां ब्रह्मिष्ठं पुरुषं ज्ञात्वा तं उपसंपद्य तत्त्वं ततो ज्ञास्यामीति मन्वानो गवां सह-

स्रं स्वर्णरत्नादिभिःसर्वतोऽलंकृतं ब्रह्मवित्सभायाम-
वरुध्यतानुवाच। हेभगवंतोब्राह्मणाःयोवोब्रह्मिष्ठस्त-
स्माएतद्गोसहस्रंमयादत्तंगृण्हीयादिति तेच भीतास्तू-
ष्णींस्थिताः । अथयाज्ञवल्क्यःतूष्णींभूतांस्तानालक्ष्य
स्वांतेवासिनमुवाच। एतागाअस्मद्गृहं नयेति सतथा
चकार तद्दृष्ट्वाब्राह्मणाश्चुक्रुधुः। क्रुद्धेषुचतेषुहोताश्वलः
आर्तभागो भुज्युर्लाह्यायनिरुषस्तः कहोल इत्येते-
ब्रह्मविदो याज्ञवल्क्येन सद्यःपराजिताः । अथोद्दाल-
केनऋषिणा अंतर्यामिणंपृष्टोयाज्ञवल्क्यः उद्दालका-
यांतर्यामिणमुवाच। साच श्रुतिरेषा। "यः पृथिव्यां-
तिष्ठन्पृथिव्याअंतरो यंपृथिवीनवेद यस्यपृथिवीशरीरं
यः पृथिवीमंतरोयमयति एष ते आत्मांऽतर्याम्यमृत
इति। एवमेव योऽप्सुतिष्ठन्योऽग्नौ योंऽतरिक्षे योदिवि
यआदित्ये" इत्याद्यनेकपर्यायैःसर्वांतर्यामीविष्णुर्नि-
रूपितः। तस्याश्चश्रुतेरयमर्थः । यःपृथिव्यांतिष्ठति-
सोंऽतर्यामी। किंघटपटादिर्नेत्याह । पृथिव्याअंतरः
किमियंवर्तमानापृथिवीदेवता नेत्याह । यंपृथिवी

देवतानवेद्सोंऽतर्यामी । पृथिवीदेवताहिस्वात्मानंन जानाति इयमहमस्मीति । तस्मान्नसा । किंशरीरं सः नेत्याह । यस्यपृथिवी शरीरमिति । यस्यपृथिव्येवशरीरं नियम्यशरीरातिरिक्तंशरीरंनास्तीत्यर्थः । एवंय अंतरेवर्तमानः पृथिवीं पृथिवीदेवतांयमयति स्वव्यापारेप्रेरयति । एषोऽमृतः कूटस्थोनित्योंऽतर्यामी हे उद्दालक ते आत्मेति । एवंसर्वपर्यायेष्वर्थो द्रष्टव्यः । एवंब्रह्मवित्सभायांसर्वांतर्यामित्वेनसिद्धंविष्णुंस्तौति ।

सर्वत्रास्ते सर्वशरीरी न च सर्वः
सर्वं वेत्त्येवेह न यं वेत्ति हि सर्वः ।
सर्वत्रांतर्यामितयेत्थं यमयन्य-
स्तं सं सारध्वांतविनाशं ह० ॥ १२ ॥

सर्वत्रेति । यः सर्वत्र पृथिव्यादिषूपादानतया आस्ते तंतुषुपटइव । सर्वंशरीरं यस्यसःसर्वशरीरी । नचसर्वः । यश्चनसर्वः किंत्वधिष्ठानतया सर्वस्यांतरः । यश्चेह पृथिव्यादौस्थितः सर्वंवेत्ति जानाति । यंच स-

र्वः पृथिव्यादिर्नवेद । "सवेत्तिवेद्यं नचतस्यास्ति वेत्ता" इत्यादि श्रुतेः "वेदाहंसमतीतानिवर्तमाना-निचार्जुन । भविष्याणिचभूतानि मांतुवेदनकश्च-न" इतिस्मृतेश्च । यः यमयन् । पृथिव्यादिप्रेरयन् विहितप्रतिषिद्धेषुप्रवर्तयन्निवर्तयंश्च । इत्थं उक्तप्रका-रेण सर्वत्रांतर्यामितयावर्तते तमित्यर्थः । तथाचोक्तम् "जानामिधर्मंनचमेप्रवृत्तिर्जानाम्यधर्मंनचमेनिवृ-त्तिः । केनापिदेवेन हृदिस्थितेन यथानियुक्तोऽस्मि-तथाकरोमि । ईश्वरःसर्वभूतानां हृद्देशेऽर्जुनतिष्ठति । भ्रामयन्सर्वभूतानि यंत्रारूढानिमायया" इतिस्मृ-तेश्च ॥ १२ ॥

सर्वेहि वेदांता ब्रह्मणोऽद्वितीयत्वं प्रत्यगात्मन-स्तद्रूपत्वंचबोधयंति । अत्रैतरेयश्रुतिस्तावत् "आ-त्मावाइदमेकएवाग्रआसीत्" इत्यवांतरवाक्येन ब्र-ह्माद्वितीयमुक्त्वा प्रत्यगात्मनोऽद्वितीयब्रह्मत्वं महा-वाक्येनबोधयति । "प्रज्ञाप्रतिष्ठा प्रज्ञानं ब्रह्मेति" । तैत्तिरीयकश्रुतिश्च "सत्यंज्ञानमनंतंब्रह्म" इत्यवां-

तरवाक्येनाद्धितीयंब्रह्मोक्त्वा "सयश्चायंपुरुषे यश्चासावादित्येसएकः" इत्यनेनमहावाक्येनप्रतीचस्तादृक्ब्रह्मत्वंबोधयति। तथा छांदोग्यश्रुत्याच "सदेव सौम्येदमग्रआसीदेकमेवाद्धितीयम्" इत्यनेनतादृशं ब्रह्मोक्त्वा। तत्त्वमसीत्यनेनमहावचसाजीवब्रह्मणोरभेदोबोध्यते। एवंचप्रतिवेदांतं तत्रतत्रद्रष्टव्यम्। ननुतत्रकथंब्रह्मणोऽद्धितीयत्वमाकाशादेर्द्धितीयस्यविद्यमानत्वात् कथंप्रतीचोब्रह्मत्वं तयोर्भेदस्यैवानुभवादित्याशंकायां। "सईक्षत लोकान्नुसृजाइतिसइमाँल्लोकानसृजत। तस्माद्वा एतस्मादात्मन आकाशः संभूतः। तदैक्षतबहुस्यां प्रजायेयेति। तत्तेजोऽसृजत" इत्याद्याः सृष्ट्याद्यर्थवादरूपाश्चश्रुतय आकाशादेःसर्वस्यजगतो ब्रह्मण एवोत्पत्तेस्तस्मिन्नेवावस्थानात्पुनस्तत्रैवलयान्मृदुत्पत्तिस्थितिलयकस्यघटादेर्मृदभेदवत्कारणब्रह्ममात्रतयावांतरवाक्योक्तंब्रह्मणोऽद्धितीयत्वंसंभावयामासुः। तथा "स एतमेव सीमानंविदार्यैतयाद्धाराप्रापद्यत। तत्सृष्ट्वा तदेवानु

प्राविशत् । अनेनजीवेनात्मनानुप्रविश्य" इत्याद्याः श्रुतयो ब्रह्मणएवजीवरूपेण प्रवेशंब्रुवंत्यो नतुबहिः स्थित्वाअंतर्गृहेप्रविष्टदेवदत्तवत् जीवब्रह्मणोरभेदं महावाक्यप्रतिपाद्यं संभावयामासुः । तथानियमनश्रुतिश्चात्यंतभेदे नियम्यनियामकभावानुपपत्तेः । तयोरभेदमेवसंभावयति । तथा "सवाएषपुरुषोऽन्नरसमयः । यदग्नेरोहितंरूपम्" इत्याद्याःतत्त्वंपदार्थशोधनरूपाःश्रुतयः जीवेश्वरोभयगतविरुद्धधर्मनिरासद्वारा तयोरैक्यमेवसंभावयंति । तथा "ब्रह्मविदाप्नोतिपरं अमृतःसमभवत्" इत्याद्याश्चाभेदज्ञानस्य निरतिशयफलप्रदर्शनेनाभेदस्यविवक्षितत्वंज्ञापयंत्यस्तमेव संभावयंति । इत्थं सृष्टिस्थितिलयप्रवेशसंयमनतत्त्वंपदार्थफलप्रतिपादकैः सप्तविधार्थवादैरनुगृहीतंसन्महावाक्यमवांतरवाक्यसहितंयत्तत्त्वंप्रतिपादयतितदिदानींस्तौति ।

सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतत्
दृष्ट्वात्मानं चैवमजं सर्वजनेषु ॥

सर्वात्मैकोऽस्मीति विदुर्यं जनहृत्स्थं
तं संसारध्वांतविनाशं हरि० ॥ १३ ॥

सर्वमिति। सर्वं वियदादिकंजगत् एतत् अनुभूयमानं स्वात्मनि स्वस्मिन्। युक्त्या। जडस्य दृक्संबंधमंतरेणभानायोगात् दृग्दृश्ययोश्चसंयोगादेरसंभवात् विषयविषयिभावस्यसंयोगादिमुख्यसंबंधपूर्वकत्वात्सर्वस्यवियदादिजडप्रपंचस्यभानान्यथानुपपत्त्या चित्यध्यस्तत्वमेवसंबंध इत्यादियुक्त्या दृष्ट्वा सर्वंजगत्स्वस्मिन्कल्पितत्वेनज्ञात्वेत्यर्थः। "पुरत्रये-क्रीडतियश्चजीवस्ततस्तुजातंसकलंविचित्रम्" इति-श्रुतेः। पुरत्रये जाग्रदाद्यवस्थात्रय इत्यर्थः। अजं जनिरहितमपरोक्षतयानुभूयमानमात्मानंच सर्वजनेषु जनिमत्सु अंतःकरणाद्युपाधिमत्सु। प्रतिबिंबतयावर्तमानं दृष्ट्वा "योयोनिंयोनिमधितिष्ठत्येकः। इंद्रोमायाभिःपुरुरूपईयते। अग्निर्यथैकोभुवनंप्रविष्टो रूपंरूपंप्रतिरूपोबभूव। एकस्तथासर्वभूतांतरात्मा

रूपंरूपंप्रतिरूपोबहिश्च" इत्यादिश्रुतेः । योनिमाया-
दिशब्दाः अंतःकरणाद्युपाधिपराः । इंद्रः परमेश्वरः
पुरुरूपः देवतिर्यगाद्यनेकरूपः ईयते लक्ष्यते । प्रति-
रूपः समानरूपः इतरत्स्पष्टम् । सर्वात्मा सर्वेषांविय-
दादीनामधिष्ठातृत्वेन स्वस्यैवसर्वशरीरेषुजीवतयाप्र-
विष्टत्वेनच सर्वात्मासर्वरूपःअतएकोऽस्मीतियमद्वि-
तीयं जनहृत्स्थं जनानां हृदि बुद्धौ स्थितं नित्या-
परोक्षमित्यर्थः । "यत्साक्षादपरोक्षाद्ब्रह्म" इतिश्रुतेः ।
साक्षाद्वृत्तिव्यवधानंविना अपरोक्षादपरोक्षमित्यर्थः ।
अत्र चश्रुतिः "सर्वभूतस्थमात्मानं सर्वभूतानिचा-
त्मनि । संपश्यन्ब्रह्मपरमं यातिनान्येनहेतुना ॥ म-
य्येवसकलंजातं मयिसर्वंप्रतिष्ठितम् । मयिसर्वंलयं-
याति तद्ब्रह्माद्वयमस्म्यहम्" इतिस्पष्टोऽर्थः ॥ १३ ॥
"एकोदेवःसर्वभूतेषुगूढःसर्वव्यापी सर्वभूतांतरात्मा ।
कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनिर्गुण-
श्च॥द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते ।
तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति"

इमौमंत्रावात्मनोऽविद्ययाकर्तृत्वादिकं परमार्थतस्तद्राहित्यंच बोधयतः। अनयोश्चैवमर्थः । पुराणप्रसिद्धंब्रह्मविष्णुरुद्राणांभेदंवारयति । एकइति। देवः स्वप्रकाशश्चिद्रूपः। सक्वेत्याकांक्षायामाह । सर्वभूतेष्विति । ब्रह्मादिस्तंबांतेषु। तर्हिकिमितिनानुभूयतइत्यतआह। गूढइति । अज्ञानेनावृतत्वान्न सामान्यप्रज्ञैरनुभूयतइत्यर्थः । तस्यत्रिविधपरिच्छेदराहित्यमाह । सर्वव्यापीति । देशकालौजीवेश्वरौजगदित्येतत्सर्वंव्याप्यस्थातुंशीलमस्येतिसर्वव्यापी । तदेवप्रतिपादयन्प्रथमंचेतनप्रतियोगिकभेदाभावमाह। सर्वभूतांतरात्मेति। चैतन्यमेकमेव सर्वेषुभूतेषु ब्रह्मादिस्थावरांतेषु प्रविश्यांतर्जीवात्मतयावर्ततइत्यर्थः । तदेवशुद्धसत्वमायाप्रतिबिंबतयाईश्वरःसन्सर्वेषांकर्मफलंददातीत्याह । कर्माध्यक्षइति । कर्मणां पुण्यपापरूपाणामध्यक्षः अधिष्ठायफलदातेत्यर्थः । जडप्रतियोगिकभेदंवारयति । सर्वभूताधिवासइति । सर्वेषांपृथिव्यादीनांभूतानामधिवासःअधिष्ठानमित्यर्थः ।

आरोपितस्याधिष्ठानाव्यतिरेकात् न तन्निरूपितो भेद इत्यर्थः । जीवेश्वररूपेणावस्थानात्प्राप्तंपुण्यादि कर्तृत्वंजगत्स्रष्टृत्वादिकंचवारयति । साक्षीति । स्व संनिधौ प्रवर्तमानकार्यकरणादेर्जगदाकारपरिणामिन्याअविद्यायाश्च साक्षी साक्षादीक्षिता । साक्षित्वे हेतुमाह । चेतेति । चैतन्यरूपइत्यर्थः । वस्तुतः साक्षित्वादिराहित्यमाह । केवल इति । सकलविशेषशून्यइत्यर्थः । ज्ञानानंदयोर्गुणत्वंकेचिद्वांछंतितान्निवारयति । निर्गुणइति । "विज्ञानमानंदंब्रह्म" इति श्रुतेःज्ञानानंदौस्वरूपमेवेत्यर्थः । द्वासुपर्णा सुपर्णाविवसुपर्णौ सयुजौ नित्यमवियुक्तौ सखायौ चिद्रूपौ अंतःकरणोपहितानुपहितौ समानंवृक्षं वृश्च्यते तत्त्वज्ञानेनसमूलमुच्छिद्यतइतिवृक्षः । कार्यकरणोपाधिः तं परिषस्वजाते आश्रयेते । यथालौकिकौ सुपर्णौपरस्परंसखायौ । एकमश्वत्थादिवृक्षमाश्रयेते तद्वत् । तयोर्मध्ये अन्य एकः । पिप्पलं कर्मफलं स्वादु रसवत् । उपलक्षणमेतत् । सुखदुःखमित्यर्थः । अ-

त्ति कर्तृत्वादिरूपकार्यकरणाविवेकाद्भुंक्ते । अन्यः कार्यकरणाद्विविक्तः । अभिचाकशीति । कर्तृत्व भोक्तृत्वरूपंकार्यकरणंकेवलंपश्यतीत्यर्थः । एवमेताभ्यांमंत्राभ्यामविद्यावस्थायांकर्तृत्वादिरूपत्वेनस्वतः साक्षिकूटस्थचिन्मात्रत्वेनप्रतिपादितंविष्णुं स्तौति ।

सर्वत्रैकः पश्यति जिघ्रत्यथ भुंक्ते
स्प्रष्टा श्रोता बुध्यति चेत्याहुरिमं यं ॥
साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये
तं संसारध्वांतविनाशं हरि० ॥ १४ ॥

सर्वत्रेति । सर्वत्र ब्रह्मादिस्थावरांतेषुकार्यकारणसंघातेषुप्रविष्टो वस्तुतएकएवसन्नपि बहुधा प्रविभक्तः । पश्यति दर्शनव्यापारंकरोति । जिघ्रति घ्राणेनगंधंगृह्णाति । भुंक्ते भोजनंकरोति । स्प्रष्टा त्वचाशीतमुष्णंचवेत्ति । श्रोता श्रोत्रेणशब्दं गृह्णाति । बुध्यति केवलमंतःस्थयाबुद्ध्याभूतंभाविच जा-

नाति । चकारोऽनुक्तसकलेंद्रियव्यापारसमुच्चयार्थः । इति एवं बहुव्यापारवत्त्वेन यं इमं अपरोक्षतयाऽनुभूयमानमविद्यावस्थमाहुः । अन्ये विवेकिनः वास्तवस्वरूपप्रतिपादकमंत्रा वा कर्तृषु कार्यकारणोपाधिषु स्वव्यापारेप्रवर्तमानेषु पश्यन् कर्तृकार्यकरणानिपश्यन्भासयन् साक्षीकेवलमास्ते परमार्थतोनकिंचिदपिकरोतीतिचयमाहुः तमित्यर्थः । तदुक्तंवासिष्ठरामायणे । "कुर्वन्नपीहजगतां महतामनंतं वृंदंन किंचनकरोतिकदाचनापि । स्वात्मन्यनस्तमयसंविदिनिर्विकल्पे त्यक्तोदयस्थितिमृतेस्थितएकएव" इति ॥ १४ ॥

नन्वेवमात्मनःकर्तृत्वादिरूपत्वतद्रहितत्वोभयप्रतिपादिकश्रुतिस्मृतिषुसतीषु अन्यतरमिथ्यात्वंकिमित्यंगीक्रियते स्वाभाविकत्वौपाधिकत्वाभ्यामुभयोरपिवास्तवत्वोपपत्तेः । अन्यतरमिथ्यात्वे वा अकर्तृत्वादेरेवमिथ्यात्वंकिंनस्यादित्याशंक्य स्वतोविरुद्धद्वयस्योपाधितोऽप्येकत्रघटनाऽसंभवात्स्फटिकेऔपा-

धिकरत्किन्नोवास्तवत्वादर्शनात्कर्तृत्वादेर्वास्तवत्वेच- सुषुप्त्यादावपितत्प्रसंगात्कर्तृत्वादेरेव कार्यकारणा- न्वयव्यतिरेकानुविधानदर्शनात् । सूत्रकारेणापि "यथाचतक्षोभयथा" इत्यनेनसूत्रेण यथा लोके तक्षा वास्यादिकरणहस्तःकर्तादुःखीभवति । सएव विमुक्तवास्यादिकरणःस्वस्थःसुखीभवति। एवमविद्या प्रत्युपस्थापितकार्यकारणोपाधिक आत्मा स्वप्नजा- गरितयोःकर्तादुःखीभवति । सएवतच्छ्रमापनुत्तये स्वात्मानंपरंप्रविश्यविमुक्तकार्यकारणसंघातोऽकर्ता सुखीभवतीतिकर्तृत्वस्यौपाधिकत्वोक्तेः औपाधिक- स्यचसत्यत्वानुपपत्तेः । अनुभवस्यचतत्परश्रुतिविरो- धेनभ्रांतित्वात्कार्यकारणोपाधिकृतंभ्रांतमेवात्मनःक- र्तृत्वादि नपारमार्थिकमित्यभिप्रेत्याह ।

पश्यन् शृण्वन्नत्र विजानन् रसयन्सन्
जिघ्रन्बिभ्रद्देहमिमं जीवतयेत्थम् ।

इत्यात्मानं यं विदुरीशं विषयज्ञं
तं संसारध्वांतविनाशं हरि० ॥ १५ ॥

पश्यन्निति ॥ इमंदेहं कार्यकारणसंघातं जीवतयाप्रविश्य बिभ्रत् आत्मा इत्थं चक्षुषोपाधिना पश्यन्भवति । तथाश्रोत्रोपाधिना शृण्वन् शब्दग्राहकः । तथा विजानन् बुद्ध्युपाधिनानिश्चिन्वन् । तथारसनेन रसयन् रसंगृह्णन् । तथाघ्राणेनगंधं जिघ्रन् भवति नतुस्वतः । तथाचश्रुतिः । "आत्मेंद्रियमनो युक्तंभोक्तेत्याहुर्मनीषिणः" इति । अस्याश्चायमर्थः । आत्मशब्देन बुद्धिरुच्यते । बुद्ध्याद्युपाधियुक्तमात्मानं कर्ताभोक्तेत्याहुः । अथवा आत्मा जीव इंद्रियमनोयुक्तं प्रथमार्थे द्वितीया छांदसींद्रियादियुक्तःसन्भोक्तेति । एवंविषयज्ञमात्मानं यंईशमेवविदुःस्वेनवास्तवरूपेण तमित्यर्थः ॥ १५ ॥

मांडूक्येश्रूयते । "सोऽयमात्माचतुष्पाज्जागरितस्थानोबहिःप्रज्ञःसप्तांगएकोनविंशतिमुखःस्थूलभुग्वै-

श्वानरः प्रथमःपादः। स्वप्नस्थानोऽतःप्रज्ञःसप्तांगएको-
नविंशतिमुखःप्रविविक्तभुक्तैजसोद्वितीयःपादः। यत्र
सुप्तोनकंचनकामंकामयते नकंचनस्वप्नंपश्यति तत्सु-
षुप्तम् । सुषुप्तस्थानएकीभूतःप्रज्ञानघनएवानंदमयो
ह्यानंदभुक्चेतोमुखःप्राज्ञस्तृतीयःपादः । अदृश्यम-
व्यवहार्यमग्राह्यमलक्षणमचिंत्यमव्यपदेश्यमेकात्मप्र-
त्ययसारंप्रपंचोपशमंशांतंशिवमद्वैतंचतुर्थंमन्यंते" इ-
ति। अयमर्थः । सोऽयमोंकारप्रतिपाद्यआत्माचतु-
ष्पात्चत्वारःपादाविश्वादिरूपायस्यसतथा। तत्रप्रथमं
पादंदर्शयति । जागरितेत्यादिना। जागरितं जा-
गरावस्थानंविषयोपलब्धिस्थानंयस्यसतथा । बहिर्दे-
हाद्बहिर्विषयेषुप्रज्ञायस्यसतथा। सप्तांगः। द्यौर्मूर्धा
चक्षुरादित्यः अग्निर्मुखं प्राणोवायुर्देहमध्यमाकाशो
बस्तिःसमुद्रः पृथिव्येवपादावितिसप्तांगानियस्यसत-
था। एकोनविंशतिमुखः। ज्ञानेंद्रियपंचकं कर्मेंद्रिय
पंचकं प्राणपंचकं अंतःकरणचतुष्टयमित्येकोनविंश-
तिसंख्याकानि मुखानि विषयोपलब्धिद्वाराणियस्य

सतथा । स्थूलभुक् । स्थूलानि पंचीकृतभूतकार्याणिघटपटादीनि भुंक्ते उपलभते इतितथा । वैश्वानरः । वैश्वानरग्रहणं व्यष्टिसमष्ट्यभिमानिनोरभेदविवक्षया विश्वइत्यर्थः । अयंप्रथमःपादः । स्वप्नस्थानः वासनामयभोगःस्थानंयस्यसतथा । अंतर्देहांतः वासनामयप्रपंचविषयाप्रज्ञायस्यसतथा । प्रविविक्तं सूक्ष्मं वासनामात्ररूपंविषयंभुंक्तइतितथा । तैजसः । तेजसिलिंगेभवःतदभिमानीइत्यर्थः । सद्वितीयःपादः । सुप्तःपुरुषो यत्र यस्यामवस्थायां नकंचनकामंकामयते नकंचनस्वप्नंपश्यति तत्सुषुप्तमिति सुषुप्त्यवस्था निरूपिता । नकंचनेत्युक्त्या जागरितमपिस्वप्नमेव मनुतेश्रुतिः । सुषुप्तस्थानः पुमानेकीभूत एकतांप्राप्तः बहुधाविभाजकचक्षुरादीनांतदालीनत्वात् । अतः प्रज्ञानघनएव नविप्रकीर्णप्रज्ञानः । आनंदमयः आनंदप्रचुरः दुःखहेतुलिंगस्योपरमात् । आनंदं स्वरूपानंदमेवभुंक्तेइतितथा । आनंदभोगेसाधनमाह । चेतोमुख

इति । चेतश्चित्प्रतिबिंबसहिताऽज्ञानवृत्तिरेव मुखमानंदभोजनेद्वारंयस्यसतथा । प्राज्ञः प्रकर्षेणांतर्बहिर्नजानातीतितथा एषतृतीयःपादः । अवस्थात्रयानुस्यूतंशुद्धचैतन्यमेव चतुर्थपादमाह। अदृश्यमित्यादिना । अदृश्यं ज्ञानेंद्रियाविषयं अव्यवहार्यं हानादिव्यवहारागोचरमग्राह्यंकर्मेंद्रियाविषयम् अलक्षणं लक्षणंलिंगंतद्रहितमनुमानाविषयमित्यर्थः । अचिंत्यमंतःकरणागोचरं अव्यपदेश्यं शब्दाविषयं तत्प्रवृत्तिनिमित्तजात्यादेरभावात्। किंत्वेकात्मप्रत्ययसारं एकोऽद्वितीयआत्मास्वरूपभूतःप्रत्ययःप्रकाशएवसारो बलंस्वसद्भावेप्रमाणंयस्यसतथा । प्रपंचोपशमं प्रपंच निवृत्तिरूपमारोपिताभावस्याधिष्ठानाभिन्नत्वात्।शिवमानंदरूपमद्वैतं द्वैतरहितं । ब्रह्मैवचतुर्थपादंमन्यंते विद्वांसइति। एवमन्यत्रकैवल्योपनिषदादावपि। आत्मनोऽविद्ययावस्थावत्त्वं स्वतस्तद्रहितत्वंचश्रुतं तादृशं श्रुतिसिद्धंविष्णुमिदानीं स्तौति ।

जाग्रद्दृष्ट्वा स्थूलपदार्थानथमायां
दृष्ट्वास्वप्नेऽथापिसुषुप्तौसुखनिद्रां ।
इत्यात्मानं वीक्ष्यमुदास्ते चतुरीये
तं संसारध्वांतवि० ॥ १६ ॥

जाग्रदिति । जाग्रज्जागरितेवर्त्तमानोयःस्थूलपदार्थान् पंचीकृतभूतकार्यरूपान् दृष्ट्वाअनुभूयाथानंतरंस्वप्नेमायां मिथ्यारथगजादिरूपांवासनामयां दृष्ट्वासुषुप्तौसुखनिद्रां स्वरूपसुखाभिव्यंजककेवलाज्ञानमनुभूयाऽविद्यादशायांइत्येवंप्रकारमात्मानं तुरीयेस्थाने समाध्यवस्थायां स्वरूपेणकेवलंवीक्ष्यमुदास्ते। स्वात्मानंदानुभवजनितसंतोषेणास्तेतमित्यर्थः ॥१६॥

नन्ववस्थात्रयविशिष्टःसुखीदुःखीचात्माप्रतिदेहंभिन्नएवप्रकाशते । तस्यैकत्वेसुखित्वदुःखित्वादिवैचित्र्यानुपपत्तेः । देवदत्तस्ययज्ञदत्तदुःखाद्यनुसंधानप्रसंगाच्च । कथमद्वितीयानंदरूपेणवेदांतवेद्यतेत्याशंक्य तस्यसर्वदेहेषुवस्तुतएकत्वेप्यवच्छेदकोपाधितो-

ऽनिर्वचनीयभेदस्यांगीकारात् । एकशरीरावच्छिन्ना-त्मनि पादेमेवेदनाशिरसिमेसुखमित्यनुभवानुरोधेन तत्तदवयवावच्छेदेन सुखदुःखवैचित्र्यवदेकस्मिन्नपि तत्तच्छरीरावच्छिन्नेतदुपपत्तिः देहभेदेनजन्मांतरीय-सुखाद्यननुसंधानवद्देवदत्तस्ययज्ञदत्तसुखाद्यननुसंधा-नोपपत्तेश्चेत्याह ।

पश्यन्शुद्धोप्यक्षरएकोगुणभेदान्
नानाकारान्स्फाटिकवद्भाति वि-
चित्रः । भिन्नश्छिन्नश्चायमजःकर्म-
फलैर्यस्तं संसारध्वांत० ॥ १७ ॥

पश्यन्निति । यःस्वतःशुद्धः सुखदुःखादिसंबं-धशून्यः । अक्षरः नाशरहितः व्यापकोवा अजः जनिरहितः । एकोऽद्वितीयोऽपि गुणभेदात्सत्वरज-स्तमःपरिणामभेदान्नानाकारान्सुरनरतिर्यगाद्याका-रभेदान्पश्यन् । तत्रतादात्म्याध्यासात्कर्मफलैःसुख-दुःखैर्विचित्रःनानारूपःभिन्नोऽनेकःपरिच्छिन्नश्चभा-

ति स्फाटिकवत् । यथास्फाटिकशिला रक्तकाद्युपाधिभेदाद्विचित्रानेकाचभातितथेत्यर्थः । अयंछिन्नः । देहांतरेऽज्ञायमानश्चभवति । तथाचश्रुतिः । "एकएवहिभूतात्माभूतेभूतेव्यवस्थितः । एकधाबहुधाचैवदृश्यतेजलचंद्रवत्" । भूतः परमार्थःआत्मा भूतेभूते देहेदेहे एकधा स्वेनरूपेण । बहुधा उपाध्याहितरूपेणेत्यर्थः । सूत्रकारोऽपि । "असंततेश्चाव्यतिकरः" इति सूत्रेण । असंततेरुपाधिपरिच्छेदादव्यतिकरः जीवानांसुखदुःखाद्यसांकर्यमिति स्वमतेसुखदुःखादिवैचित्र्यमुपपाद्य । "अदृष्टानियमात्" । इत्यादिसूत्रत्रयेण सर्वगतवास्तवानेकात्मवादिमते सर्वेषुशरीरेष्वपिसर्वेषामात्मनांसंनिधानात्सर्वसंनिधानुत्पद्यमानादृष्टस्यसाधारण्यात्सुखदुःखादिसांकर्यमापादयामास । ततआत्मैकत्वेदोषाभावात्तस्मादद्वयानंदरूपेणवेदांतवेद्यतोपपद्यतइतिभावः ॥ १७ ॥

"इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यः ससुपर्णोगरुत्मान् । एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वान-

माहुः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदुचंद्रमाः । तदेवशुक्रममृतंतद्ब्रह्मतदापःसप्रजापतिः । सब्रह्मासशिवः सेंद्रःसोक्षरःपरमःस्वराट् सएवविष्णुःसप्राणःसकालोग्निःसचंद्रमाः" इत्यादयोमंत्रा ब्रह्मणएवसकलदेवतात्मकतयाऽवस्थानमाहुः । शुक्रं ज्योतिष्मत् ब्रह्मवेदः । आपशब्देनतदधिष्ठातावरुणउच्यते । प्राणः वायुः कालः प्रजासंहर्त्तायमः । एतैर्मंत्रैःसर्वदेवात्मकत्वेनसिद्धंविष्णुंस्तौति ।

ब्रह्माविष्णूरुद्रहुताशौरविचंद्राविं-
द्रोवायुर्यज्ञइतीत्थंपरिकल्प्य । ए-
कंसंतंयंबहुधाहुर्मतिभेदात्तंसंसार-
ध्वांतविनाशं हरिमीडे ॥ १८ ॥

ब्रह्मेति । ब्रह्माऽपंचीकृतभूतव्यतिरिक्तसकलस्रष्टाहिरण्यगर्भः । विष्णुः सत्वसाधनकःसकलजगत्पालकःपरमेश्वरः । रुद्रः सत्वोपाधिकस्तमःसाधनकः जगत्संहर्त्तापरमेश्वरः । तस्यतमउपाधिकत्वंजीव-

त्वारोपाज्जीवत्वस्यबहुश्रुतिस्मृतीतिहासपुराणविरुद्ध-
त्वेन तद्वादिनःपाखंडशिरोमणित्वापत्तेः । "सत्वंदे-
वाहरादयः" इतिवसिष्ठवचनात् । इत्यादिष्टःसगुरुणा-
भगवान्नीललोहितः सत्वाकृतिस्वभावत्वात्ससर्जात्म-
समाः प्रजाइतिभागवतवचनाच्च । कुत्रचिच्छ्रूयमा-
णतमःसंबंधस्यकार्यार्थित्वेनाप्युपपत्तेः । यज्ञइति भग-
वतोविष्णोर्मूर्त्त्यंतरं । मतिभेदाद्बुद्धिवैचित्र्यात् । मति-
भेदाइतिपाठेभिद्यंतइतिभेदाः भिन्नमतयइत्यर्थः॥१८॥

तैत्तिरीयकोपनिषत् एवंब्रह्मप्रतिपादयति । प्रथमं
"ब्रह्मविदाप्नोतिपरं" इतिसंहिताद्युपासनादिभिःए-
काग्रचित्तमधिकारिणंप्रति ब्रह्मविद्यांसविषयांसफलां-
सूत्रयामास । ब्रह्मेतिविषयनिर्देशः । विदित्यनेनवि-
द्यानिर्दिश्यते परमाप्नोतीतिविद्याफलं निर्दिश्यते इ-
ति विभागः । तदनंतरं सूत्रस्यार्थंसंक्षेपतः । "सत्यंज्ञा-
नमनंतंब्रह्म योवेदनिहितंगुहायांपरमेव्योमन्सोऽश्नु-
तेसर्वान्कामान्सहब्रह्मणाविपश्चितेति । अस्यांऋचउ-
दाहरणेनव्याचकार । सत्यमित्यादि सूत्रस्थब्रह्मपद-

व्याख्यानं योवेदेत्यादि वित्पदव्याख्यानं सोऽश्नुतेइ-त्यादि । आप्नोति परमिति पदद्वयव्याख्यानमिति-विभागः । ऋचोऽयमर्थः । सत्यं कालत्रयबाधाभा-वोपलक्षितं ज्ञानं स्वप्रकाशं अनंतं अंतःपरिच्छेदः देशकालवस्तुकृतस्त्रिविधपरिच्छेदाभावोपलक्षितं । ब्रह्मेतिलक्ष्यनिर्देशः । सत्यादिपदत्रयलक्षणं गुहायां बुद्धौ यत्कारणत्वेनवर्त्ततेपरमंव्योमाव्याकृताकाशं । तत्रनिहितं प्रतिबिंबितयावस्थितंयच्चैतन्यं तद्ब्रह्मत्वे-नयोवेद स सर्वान्कामान्सार्वभौमादिहिरण्यगर्भा-न्तान्सहयुगपदश्नुतेभुंक्ते केन प्रकारेण । विपश्चिता सर्वज्ञेन ब्रह्मणा सर्वज्ञरूपेण नोपाधिपरिच्छिन्नरूपेण ब्रह्मानंदेस्वल्पानंदानामंतर्भावात्सार्वभौमादिहिरण्य-गर्भांतभोगानां ब्रह्मवित्स्वरूपभूतत्वाच्चैतन्यभास्य-त्वाच्चब्रह्मविदोयुगपत्सर्वभोक्तृत्वमित्यर्थः । अनंतरं ब्र-ह्मणः सूत्रव्याख्यानरूपयाऋचाउदीरितानंत्यसिद्ध-येआकाशादेर्ब्रह्मण एवोत्पत्तिंकथयामास । ततोयो-वेदेत्याद्युक्तंब्रह्मणःस्वरूपंप्रवक्तुं । सवाएषपुरुषोऽन्नरस-

मयः इत्यारभ्य देहादिपंचकोशात्मोपदेशक्रमेणब्रह्म-
पुच्छंप्रतिष्ठेतिपुनर्विस्तरेणप्रतिपादयांबभूव। ततःब्रह्म-
णोनामरूपातीतस्यप्रत्यक्षाद्यविषयत्वेनाऽसत्त्वशंका-
यां सोऽकामयतेति कामयितृत्वेनस्वर्गकामीव । स-
तपोतप्यतेतिआलोचकत्वेनमंत्रिवदिदंसर्वमसृजते-
तिस्रष्टृत्वेनकुलालवत्तदेवानुप्राविशदितिप्रवेष्टृत्वेनस-
र्पादिवच्चसत्वमुपपाद्य पुनश्च कोह्येवान्यादित्यादि-
ना सर्वप्राणिनांजीवनहेतुत्वेन यदाह्येवैषइत्यादिना
विद्वदऽविद्वद्भयाभयहेतुत्वेनच तदेवसत्वंदृढीचकार ।
अनंतरंच सैषानंदस्येत्यादिनानंदमीमांसामारभ्य सा-
र्वभौमादिहिरण्यगर्भान्तानामानंदानामुत्तरोत्तरशत-
गुणोत्कर्षप्रदर्शनपूर्वकं ब्रह्मविदुषो । "यतोवाचोनि-
वर्त्तंतेअप्राप्यमनसासह। आनंदंब्रह्मणोविद्वान्नबिभे-
तिकुतश्चन" इतिवाङ्मनसोऽगोचरनिरतिशयब्रह्मानं-
दाप्तिं निरतिशयानर्थनिवृत्तिंचप्रतिपाद्य। पुनरेतंहवा-
वेत्यादिनाऽनर्थनिवृत्तिंप्रपंच्य निरतिशयानंदब्रह्माप-
रोक्षज्ञाने साधनाकांक्षायां भृगुर्वैवारुणिरित्यादि-

नाभृगुवरुणसंवादमुपक्रम्य यतोवाइत्यादिनाब्रह्म-णस्तटस्थलक्षणकथनपूर्वकं प्रियायपुत्रायवरुणेनपि-त्रोपदिष्टं तपआख्यं पुनःपुनर्विचारमेव ब्रह्मापरोक्षाय मुख्यंसाधनमुपदिश्य ब्रह्मविदस्तदृषिगानंचांतेप्रदर्श्य उपरराम तैत्तिरीयोपनिषत् । इत्थंतयामातृवत्सर्वप्रा-णिहितैषिण्याप्रतिपादितंविष्णुंस्तौतिद्वाभ्यां ।

सत्यंज्ञानं शुद्धमनंतं व्यतिरिक्तं
शांतंगूढं निष्कलमानंदमनन्यम् ।
इत्याहादौ यंवरुणोऽसौ भृगवेऽजं
तं सं० ॥ १९ ॥

सत्यमिति । सत्यमबाध्यं । ज्ञानं जडविरोधि । शुद्धं मलासंस्पृष्टं । अनंतं त्रिविधपरिच्छेदशून्यं । व्य-तिरिक्तं कोशपंचकभिन्नंतत्साक्षिणं । शांतं निरस्तस-मस्तोपप्लवं । अत्रश्रुतिः । "यदाह्येवैषएतस्मिन्नदृश्ये-ऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयंप्रतिष्ठां विंदतइति ।" अस्यचायमर्थः । यदैव यस्मिन्नेवकाले एष साधक

एतस्मिन्नित्यापरोक्षेऽदृश्येदृश्यप्रपंचरहिते तत्पदलक्ष्य इत्यर्थः। अनात्म्ये स्थूलदेहरहितेनिरुक्तिर्लिंगं तद्रहिते । अनिलयने निलीयंतेप्रपंचदेहलिंगानिअस्मिन्निति निलयनमज्ञानं तद्रहितेत्वंपदलक्ष्यइत्यर्थः । प्रत्यगभिन्नेब्रह्मणीतिपदचतुष्टयार्थः । तस्मिन्नभयं भयरहितंयथाभवतितथा प्रतिष्ठांस्थितिं विंदते लभते । उक्तरूपंब्रह्मात्मतयाजानातीत्यर्थः । "अथसोऽभयंगतोभवति ।" अथानंतरमेवोक्तवेदनानंतरकालएव स ब्रह्मविदऽभयं जननमरणप्रवाहनिमित्तभीतिराहित्यं गतः प्राप्तो भवति । गूढमनवग्राह्यं । वाङ्मनसागोचरमित्यर्थः । यतोवाच इतिश्रुतेः। निष्कलं। निरवयवं । आनंदं परमप्रेमास्पदं। अनन्यं श्रोत्रियस्वरूपम्। अत्रश्रुतिः । "सयश्चायंपुरुषेयश्चासावादित्येसएक इति" पुरुषे कार्यकरणसंघातेऽयमपरोक्षतयाऽनुभूयमानोयश्चिद्धातुःसाक्षितयावर्त्तते । यश्चादित्येंऽतर्यामितयाअसौ परोक्षत्वेनभासमानोवर्त्तते। सउभयत्रवर्त्तमानश्चिद्धातुः । एकएव नभिन्नइत्यर्थः इत्येवमादा-

वानंदवल्यांप्रतिपादितंयंविष्णुं अजं जन्मरहितं। असौ वरुणो भृगवे भृगुनामकायमहर्षयेपुत्रायायाहोक्तवान्। यतोवेत्यादिना। तमित्यर्थः॥ १९॥

कथं भृगुर्वेदेत्याकांक्षायां तद्वेदनप्रकारमाह।

कोशानेतान्पंचरसादीनऽतिहाय ब्र-
ह्मास्मीति स्वात्मनिनिश्चित्य दृ
शिस्थः। पित्रादिष्टो वेद भृगुर्यं
यजुरंते तं संसारध्वांत०॥ २०॥

कोशानिति। रसादीनऽन्नरसविकाररूपस्थूलदेहादीन्पंचकोशानऽतिहायानात्मत्वेनविहाय। पंचकोशस्वरूपंतु प्रत्यक्तत्त्वविवेकेविद्यारण्यगुरुभिःप्रदर्शितं। "स्यात्पंचीकृतभूतोत्थोदेहःस्थूलोऽन्नसंज्ञकः। लिंगेतुराजसैःप्राणैःप्राणःकर्मेंद्रियैःसह। सात्विकैर्धींद्रियैःसाकं विमर्शात्मामनोमयः। तैरेवसाकंविज्ञानमयोधीर्निश्चयात्मिका। कारणेसत्वमानंदमयोमोदादिवृत्तिभिरिति"। ज्ञानेंद्रियाणांसंशयनिश्चयोभ-

यहेतुत्वेनमनोमयेविज्ञानमयेचसंबंधः। दृशिस्थः। कार्यकारणसंघातेसाक्षित्वेनयच्चैतन्यंतद्रूपेणस्थितःसन् स्वात्मन्येव स्वस्वरूपएव आनंदोब्रह्मेतिव्यजानादित्यादिना यतोवेत्यादिलक्षणयोजनपूर्वकं सर्वप्रतिष्ठाभूतंब्रह्मनिश्चित्य पित्राशिष्टोभृगुः यजुरंतेतैत्तिरीयोपनिषदिब्रह्मास्मीतियंवेद तमित्यर्थः ॥ २० ॥

ननु नास्तिजीवातिरिक्तःकश्चिदीश्वरोजगत्स्रष्टा प्राणिनांभयाभयहेतुः । जगतोनित्यत्वात्सुखदुःखयोश्चपुण्यपापमूलत्वाद्वेदांतानांचकर्मशेषभूतकर्त्रादिस्तावकत्वेन प्रत्यक्षादिविरुद्धाद्द्वितीयेश्वरेप्रमाणत्वाभावादितिजैमिनीयानांमतमाशंक्यसर्वस्यजगतःसावयवत्वादिनाकार्यत्वेनानुमितस्याधिष्ठातारंपरमेश्वरं विनोत्पत्त्यनुपपत्तेः । जीवानांचैतादृशजगदुत्पादने ज्ञानसामर्थ्ययोरसंभवात्। चेतनत्वेनस्वतंत्राणांचतेषां पारवश्यंविनास्वतोदुःखहेतुकर्मानुष्ठानेनतद्भोगासंभवात् । कर्मणांचजडत्वेनजगत्सर्जने जीवानांसुखदुःखदानेच स्वतोऽधिष्ठातारंविना समर्थत्वात् । वेदांते-

श्रप्राणिकर्मानुरोधेनजगत्स्रष्टुःतत्कर्मफलदातुश्चेश्वर-
स्यसिद्धिप्रकारस्यपूर्वमुक्तत्वात्तत्परश्रुतिविरोधेप्रत्य-
क्षादेराभासत्वात्कर्मविरुद्धप्रतिपादकवेदांतानांतच्छे-
षात्मकस्तावकत्वानुपपत्तेश्चास्तिकार्यमंकुरादिकं स-
कर्तृकं कार्यत्वात् घटवदिति कार्यलिंगादितर्कानु-
गृहीतश्रुतिसिद्धःकश्चित्परमेश्वरइत्यभिप्रेत्याह ।

येनाविष्टो यस्यचशक्त्या यदधीनः
क्षेत्रज्ञोयं कारयिता जंतुषुकर्त्तुः ।
कर्त्ताभोक्तात्मात्रहिचिच्छक्त्यधिरूढ
स्तं संसारध्वांतविना० ॥ २१ ॥

येनेति । क्षेत्रज्ञोयेनपरमेश्वरेणाविष्टो दुष्करम-
पिकर्मक्वचित्करोति ग्रहाविष्टवत् । आवेशनिर्मुक्तो-
नशक्नोतिकर्त्तुं सोऽस्तिकश्चित्परमेश्वरः । अर्जुनादा-
वीश्वरावेशश्रवणात् । यस्यचशक्त्या माययाविष्टो
ज्ञानस्वरूपोऽपि मूढोऽहंनजानेकिंचिदज्ञोऽभिमन्यते ।
सोस्तिशक्तिमान्कश्चिदितिगम्यते । अथश्रुतिः ।

"अनीशयाशोचतिमुह्यमानः" इति । अनीशयाऽऽत्माज्ञानावरणेनेश्वरभावाप्रतिपत्त्या मुह्यमानोदेहादिष्वभिनिविशमानः । शोचति । तद्गतवैक्लव्येनविषीदतीत्यर्थः । तदुक्तंभगवतापि । "दैवीह्येषागुणमयीममभायादुरत्यया" इति । अतएवक्षेत्रज्ञोऽयं यदधीनः सर्वव्यापारेषुवर्त्ततेऽस्तिसईश्वरः । जंतुषु सर्वभूतेषुकर्त्तुःकारयितेत्यभ्युपगंतव्यं । तदुक्तंसूत्रकारेण । "परात्तुतच्छ्रुतेः" इति । परादीश्वरान्निमित्तात्क्षेत्रज्ञःकर्त्ता । तच्छ्रुतेः । "एषह्येवसाधुकर्मकारयति" इतीश्वरस्यप्रयोजकत्वश्रवणादिति । यस्यपरमात्मनश्चिच्छक्त्याधिरूढः चित्स्वरूपव्याप्तः । कर्त्ताभोक्तात्मेतिप्रसिद्धोऽहंकारोऽत्रकार्यकारणसंघातेकृशानुव्याप्तोलोहइव तमीडेइत्यर्थः ॥ २१ ॥

ननु जीवेश्वरयोःप्रवर्त्यप्रवर्त्तकभावेनभेदादद्वैतवाक्यार्थासिद्धिरित्याशंक्य तयोःकल्पितभेदेसत्यपि वास्तवाभेदमादायैवाद्वैतवाक्यार्थोपपत्तिरित्यभिप्रेत्याह

सृष्ट्वासर्वं स्वात्मतयैवेत्थमतर्क्यं
व्याप्याथांतः कृत्स्नमिदंसृष्टमशे-
षम् । सच्चत्यच्चाभूत्परमात्मासय-
एकस्तं सं० ॥ २२ ॥

सृष्ट्वेति । स श्रुत्यंतरप्रसिद्धो यः परमात्मा एको वस्तुतोजीवाभिन्नः इत्थमनुभूयमानानेकप्रकारमतर्क्यंतर्कासहंसर्वमिदंजगत्सृष्ट्वाथ सृष्टमिदमशेषं सुरनरतिर्यगादिशरीरंकृत्स्नं स्वात्मतयैवव्याप्यतत्रप्रविश्यतादात्म्याध्यासेनस्वस्वरूपतयागृहीत्वेत्यर्थः । "तत्सृष्ट्वातदेवानुप्राविशत् सएषइहप्रविष्टआनखाग्रेभ्य इतिश्रुतेः" । सच्चत्यच्चाभवत्परोक्षप्रत्यक्षरूपोऽभूदितियावत् । तंपरमात्मानमीडेइति ॥ २२ ॥

एवंतावदद्वैतवाक्यप्राधान्येनस्तुत्वाऽधुनाशास्त्रैः सर्वैरपियथारुचिऋजुवक्रमार्गाभ्यांप्रतिपाद्यमानं विष्णुंस्तौति ।

वेदांतैश्चाध्यात्मिकशास्त्रैश्चपुराणैः
शास्त्रैश्चान्यैःसात्वततंत्रैश्चयमीशं ।
दृष्ट्वाथांतश्चेतसिबुद्ध्वाविविशुर्यं-
तं संसारध्वांतविनाशं० ॥ २३ ॥

वेदांतैरिति । वेदांतैःसच्चिदानंदाद्वयप्रत्यगऽभिन्नत्वेनप्रतिपाद्यमानैराध्यात्मिकशास्त्रैरात्मानंजीवमधिकृत्यप्रवर्त्तमानैःसांख्यादिशास्त्रैरसंगचिद्रूपत्वादिरूपेण पुराणैः शिवविष्णवादिरूपेणान्यैश्चशास्त्रैर्वैशेषिकाद्यभिमतैर्ज्ञानादिगुणकत्वेनप्रत्यग्भिन्नत्वादिरूपेणच सात्वततंत्रैः सत्स्वरूपमस्यास्तीतिससत्वान् वासुदेवः । तस्यभक्तत्वेनाभिमताःसात्वतास्तेषांतंत्रैर्वैष्णवशास्त्रैरित्यर्थः । तैर्वासुदेवादिरूपत्वेन चकारादन्यैश्चब्राह्मशैवादितंत्रैस्तेनतेनप्रकारेणप्रतिपाद्यमानं वस्तुतएकमेवयमीशंदृष्ट्वा प्रथमंशास्त्राचार्येभ्योज्ञात्वा । अथानंतरं ध्यानेनांतश्चेतसिबुद्ध्वा ईश्वरोऽस्मी-





तिसाक्षादनुभूय केचनपूर्वेमहात्मानन्यविविशुः । आत्मत्वेनप्राप्तास्तं ॥ २३ ॥

नन्वेवंसर्वेऽपिकिमितिशास्त्राचार्येभ्यईशंज्ञात्वाचेतसिसाक्षादनुभूयतंनप्राप्नुवंतीत्याशंक्य । "श्रद्धावित्तोभूत्वात्मन्येवात्मानंपश्यति । यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ । तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः । ततस्तुतंपश्यतेनिष्कलंध्यायमानः शांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वाआत्मन्येवात्मानंपश्यति" इत्यादिश्रुतेः । एतैःसाधनैरेवविष्णुरात्मत्वेनप्राप्तुंशक्यः । नतुतद्रहितैःशब्दमात्रपंडितैरित्याह ।

श्रद्धाभक्तिध्यानशमाद्यैर्यतमानै र्ज्ञातुंशक्योदेवइहैवाशुयईशः । दुर्विज्ञेयो जन्मशतैश्चापिविनातै स्तं सं० ॥२४॥

श्रद्धेति । श्रद्धा श्रुतिगुरुवाक्ययोर्विश्वासः । भक्तिःगुरौविष्णौचप्रेम ध्यानंगुरूपदिष्टार्थेब्रह्मणिवि-

जातीयप्रत्ययतिरस्कारेणसजातीयप्रत्ययप्रवाहसंपादनं। शमोंऽतःकरणस्यविषयेभ्योऽव्यावृत्तिः आदिशब्देनदमःबाह्येंद्रियाणांस्वस्वविषयेभ्योऽव्यावृत्तिः। उपरतिः। विधितःसकललौकिकवैदिककर्मत्यागः। तितिक्षाऽपराधिन्यक्रोधः। समाधानं समाध्यनुष्ठानमित्येतानिसाधनानिगृह्यंते। एतैःसाधनैर्यतमानैर्दर्शनेयत्नंकुर्वद्भिः। देवः स्वप्रकाशः। यईशः परमेश्वरः। इहास्मिन्नेवलोके ज्ञातुं प्रत्यक्त्वेन साक्षात्कर्त्तुंशक्यः। तैरेतैःसाधनैर्विना जन्मशतैः शास्त्रशतैः पांडित्यशतैरपि योद्धुर्विज्ञेयः। ज्ञातुमशक्यस्तमित्यर्थः। तथाचश्रुतिः। "नाविरतोदुश्चरितान्नाशान्तोनासमाहितः। नाशांतमानसोवापि प्रज्ञानेनैनमाप्नुयात्" इति। दुश्चरितान्निषिद्धकृत्यात् अविरतोऽनुपरतःपुरुषः। अशांतः। विषयेभ्योऽव्यावृत्तचित्तः। असमाहितः। समाध्यनुष्ठानरहितः। अशांतमानसोऽसतिनिमित्तेक्रोधादिकं कुर्वन्वाऽपिशब्दात् स्थितप्रज्ञादियुक्तलक्षणरहितोगृह्यते। प्रज्ञानेन प्रकृष्टंअ-

संभावनाद्यऽप्रतिबद्धंज्ञानंप्रज्ञानंतेन एवमुक्तसाधनसहितैरपरोक्षतयानुभूयमानमपरिमितानंदमात्मानं नाप्नुयात् संभावनायांलिङ् । तादृशस्यपुंसस्तत्प्राप्तिसंभावनापिनास्तीतिश्रुतेरर्थः ॥ २४ ॥

यदुक्तंवेदांतैरीशंदृष्ट्वाइतितत्स्फुटयति ।

यस्यातर्क्यं स्वात्मविभूतेः परमार्थं
सर्वंखल्वित्यत्रनिरुक्तंश्रुतिविद्भिः ॥
तज्जादित्वादब्धितरंगाभमभिन्नं तं
संसारध्वांतविनाशंहरिमीडे ॥२५॥

यस्येति । स्वात्मविभूतेः स्वात्मनएवसाधनांतरनिरपेक्षतयाविभूतिर्विविधजगदाकारभवनंयस्यसतथा तादृशस्यपरमेश्वरस्यातर्क्यं तर्कागम्यमतएवपरमार्थमविकारिवास्तवरूपं । परमेश्वरस्यचतर्कागम्यत्वे इमौ मंत्रौसाक्षिणौ । "कोअद्धावेदकइहप्रवोचत्कुतआजाताकुतइयंविसृष्टिः । अर्वाग्देवाअस्यविसर्जनेनाथकोवेदयतआबभूव । इयंविसृष्टिर्यतआ-

बभूवयदिवादधेयदिवान योअस्याध्यक्षःपरमेव्योमन्सोअंगवेदयदिवानवेद" इति । अस्यचायमर्थः । इहास्मिन्संसारमंडलेकःपुमानऽद्धा निश्चयेन वेद जानीयात् प्रवोचत् प्रब्रूयात् । कुतोहेतोरियंविसृष्टिः सृज्यतइतिसृष्टिरनुभूयमानमिदंजगत् । आजाता आसमंताद्दुत्पन्नाकुतश्चहेतोःस्थितिमनुभवतितंकोवेदेत्यर्थः । देवाज्ञास्यंतीत्याशंक्याह । अर्वागित्यादिना । अस्यपरस्यविसर्जनेनहेतुनाऽस्येतिकर्त्तरिषष्ठी । अनेनपरमेश्वरेणविसृष्टत्वाद्देवाब्रह्मादयोऽर्वाचीना अतोनतेषांस्वपूर्वतनपरिज्ञानेसामर्थ्यमित्यर्थः । अथैवंसतियतइदमाबभूवतंपरमेश्वरंकोवेद नकोपीत्यर्थः । इदमेवपरमेश्वरस्यदुर्विज्ञानत्वंप्रपंचयत्युत्तरोमंत्रः । इयंविसृष्टिर्यतःकारणादाबभूव । यदिवा अथवा योदधे जगद्धारयति । यदिवाप्रलयकाले नदधे नस्थापयतितंकोवेद किंबहुना ईश्वरोऽपिस्वमहिमानंपरिच्छेत्तुंशक्नोतिनवेतिसंशयइत्याह । अस्यपरिदृश्यमानस्यजगतोयोऽध्यक्षः । अधिष्ठायप्रवर्त्त-

कः परमेश्वरोऽविद्यातत्कार्येभ्यः परस्मिन्व्योम्निस्वस्वरूपचिदाकाशेप्रतिष्ठितः । सोऽपिस्वमहिमानंवेद-जानाति । यदिवा नवेद नजानाति । अपरिच्छिन्नस्वप्रकाशचिद्रूपस्यपरिच्छेदाभावेनाविषयत्वेनच दुर्विज्ञानत्वात्सगुणस्वरूपस्यचगुणानामानंत्येनतथात्वादीश्वरस्यसर्वज्ञत्वप्रसिद्धेश्चश्रुतेःसंशयः ईश्वरस्यस्वस्वरूपेइयत्तापरिज्ञानमस्तिनवेति । वयंतुनिर्णयामोनास्तीति कुतः उभयस्याप्यानंत्यादेव । नचतस्यसर्वज्ञत्वव्याहतिः । स्वरूपेइयत्तायाअसत्त्वात् । नचशशविषाणाज्ञानेतस्यासर्वज्ञत्वमिति । एवमपि-
सर्वंखल्विदंब्रह्मेति" । अत्रश्रुतौश्रुतिविद्भिराचार्यैः कथंचित्सर्वाधिष्ठानत्वेननिरुक्तंयस्यपारमार्थिकंरूपं । कथमित्यपेक्षयामाह । तज्जादित्वात् । तत्रश्रुतौ । तज्जलानितिपदद्वयेन यतइदंजगत्तज्जलान् । ततोजायतेलीयतेऽनितिचेत्येवमर्थकेन अब्धितरंगाभंसमुद्रतरंगतुल्यं । इदंकार्यंजातंतज्जत्वात्तल्लयत्वात्तदनत्वाच्चाभिन्नं । ब्रह्मणोभेदेनालब्धसत्ताकंततोऽनृतं ।

तदधिष्ठानभूतं वस्तुतोनिष्प्रपंचसच्चिदानंदाद्वयंब्रह्मै-
वपरमार्थमित्येवं निरुक्तंनिरूपितंतमीडेइत्यर्थः॥२५॥

नन्वेवंब्रह्मणोनिखिलजगदधिष्ठानतयाऽद्वितीय-
त्वे प्रत्यगभिन्नत्वेच सर्वज्ञभगवत्कपिलादिस्मृत्यन-
वकाशप्रसंगः । तासुहिस्मृतिषु प्रधानादेः कारण-
त्वं जीवपरयोर्जीवानांचपरमार्थतोभेदो जगतः प-
रमार्थत्वमित्येतेऽर्थाःप्रतिपाद्यंते । नचतासांस्मृतीनां-
निरवकाशत्वंयुक्तमंगीकर्तुं । सर्वज्ञकपिलादिप्रणीत-
त्वादित्याशंक्य । "विरोधेत्वनपेक्षंस्यादसतिह्यनुमा-
नम्" । इतिसूत्रेण श्रुतिस्मृत्योः परस्परविरोधे स्मृ-
तेःप्रामाण्यमनपेक्षमनंगीकार्यमसतिहिविरोधेऽनुमानं
स्मृतिः प्रमाणमिति जैमिनिनाप्रतिपादितन्यायात् ।
श्रुतिविरोधे तासामप्रामाण्यस्येष्टत्वेस्थितेपि स्मृति-
विरोधशंकमानानां स्मृत्यंतरविरोधोपन्यासेनैवोत्तरं-
दास्यामीतिमन्वानोबहूनांस्मृतीनां "यद्वैकिंचनमनु-
रवदत्तद्भेषजम्" इत्यादिश्रुत्यवगतमाहात्म्यसर्वज्ञम-
न्वादिप्रणीतानांजीवपराभेदजगन्मिथ्यात्वप्रतिपाद-

कानामुपनिषन्मूलत्वेनबलवतीनां बहुलतरदृढतरानु-
कूलतर्कानुगृहीतानामनवकाशदोषस्यप्राबल्यमभिप्रे-
त्य स्वतःसिद्धसर्वज्ञश्रीभगवदीश्वरस्मृतावप्यद्वैतमेव-
परमार्थंनिरूपितमित्याह ।

दृष्ट्वागीतास्वक्षरतत्वं विधिनाजं
भक्त्यागुर्व्यालभ्यहृदिस्थंदृशिमा-
त्रम् । ध्यात्वातस्मिन्नस्म्यहमित्य-
त्रविदुर्यं तं संसारध्वांत० ॥ २६ ॥

दृष्ट्वेति । गीतासु अक्षरंब्रह्मपरममित्यादिषु अ-
जमक्षरतत्वंसर्वव्यापकंब्रह्मरूपं । विधिना तद्विद्धिप्र-
णिपातेनेत्युक्तेन दृष्ट्वा आचार्येभ्योज्ञात्वा गुर्व्या-
भक्त्या अन्वयव्यतिरेकाभ्यामात्मानात्मविषयाभ्यां
त्वंपदार्थशोधनरूपायाभक्तिर्भजनं तया अहमित्यत्र
वेद्यानात्मांशप्रहाणेन त्यागेन चैतन्यमात्रं हृदिस्थं बु-
द्धौसाक्षित्वेनस्थितमात्मत्वेनोपलभ्य तयोश्चदृश्याक्षर-

योरेकलक्षणत्वेनऐक्यंध्यात्वा । अत्रानुभूयमानप्रत्यगभिन्ने तस्मिन्नक्षरे अहमस्मीत्यभेददर्शनेनयंविदुस्तमित्यर्थः । "येत्वक्षरमनिर्देश्यमव्यक्तंपर्युपासते । सर्वत्रगमचिंत्यंचकूटस्थमचलंध्रुवं । क्षेत्रज्ञंचापिमांविद्धिसर्वक्षेत्रेषुभारत । ज्ञेयंयत्तत्प्रवक्ष्यामियज्ज्ञात्वामृतमश्नुते । अनादिमत्परंब्रह्म नसत्तन्नासदुच्यते" । इत्याद्यध्यायसमाप्तौ । "सर्वभूतेषुयेनैकंभावमव्ययमीक्षते । अविभक्तंविभक्तेषुतज्ज्ञानंविद्धिसात्विकम्" इत्यादौसर्वत्रगीतासुब्रह्मणोऽसंगत्वाद्वितीयत्वप्रत्यगभिन्नत्वादिकंसम्यक्प्रतिपादितमितिभावः ॥ २६ ॥

"स्वकृतविचित्रयोनिषुविशन्निवहेतुतया तरतमतश्चकास्यऽनलवत्स्वकृतानुकृतिः । अथवितथास्वमूष्ववितथंतवधामसमं विरजधियोऽन्वयंत्यभिविपण्यवएकरसं । एकस्त्वमात्मापुरुषःपुराणः सत्यःस्वयंज्योतिरनंतआद्यः । नित्योऽक्षरोऽजस्रसुखोनिरंजनः पूर्णोऽद्वयोमुक्तउपाधितोऽमृतः । तस्मादिदंजगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणंपुरुदुःखदुःखं । त्वय्येव-

नित्यसुखबोधतनावनंते मायातउद्यदपियत्सदिवावभाति। नसजीवःशिवादन्यो योभुंक्तेकर्मणांफलम्। भेदाभावाच्चचैतन्यं नकर्मफलमर्हति। अतःसर्वजगत्साक्षी चिद्रूपःपरमेश्वरः। अद्वितीयोमहानंदः क्रीडयाभोगमर्हति। जीवरूपइवस्थित्वा यःक्रीडतिपुरत्रये। नसजीवःसदाशंभुः सत्यमेवनसंशयः। सत्योऽसत्यस्यसाक्षित्वात्सदासच्चित्सुखंतथा। प्रेमास्पदत्वादद्वैतो भेदाभावात्सुरर्षभाः" इत्यादौसर्वत्र शिवविष्णुपुराणेष्वप्यद्वैतोविष्णुःप्रत्यगभिन्नःप्रतिपाद्यतइत्यभिप्रेत्याह।

क्षेत्रज्ञत्वं प्राप्य विभुः पंचमुखैर्यो
भुंक्तेऽजस्रं भोग्यपदार्थान्प्रकृतिस्थः॥ क्षेत्रेक्षेत्रेऽप्स्विदुवदेको बहुधास्ते तं संसारध्वांतवि०॥२७॥

क्षेत्रज्ञत्वमिति॥ योविभुःपरमात्मा प्रकृतिस्थः अविद्यातत्कार्येषुप्रतिबिंबतया क्षेत्रज्ञत्वं जी-

वभावं प्राप्य गत्वा पंचभिर्मुखैः विषयभोगद्वारभूतैरिंद्रियैः भोग्यपदार्थान्शब्दादीनजस्रं सदाभुंक्ते उपलभते । यच्चक्षेत्रेक्षेत्रे प्रत्यंतःकरणाद्युपाधिषुबहुधाऽप्सुअनेकपात्रस्थितासु इंदुवत्चंद्रवदास्तेवर्त्ततेतमीडइत्यर्थः । तदुक्तम् "एकएवहिभूतात्माभूतेभूतेव्यवस्थितः । एकधाबहुधाचैव दृश्यतेजलचंद्रवत्" इति । उक्तोऽस्यार्थइति ॥ २७ ॥

ननुसर्वे वादिनोद्वैतमेवपरमार्थमवलंबंते । युक्तिभिश्चबहुभिस्तदेवोपपादयंति । तदेवसर्वैरनुभूयतेच श्रुतिमपिद्वैतानुगुण्येनैवयोजयंति । भवानेकएवत्वऽद्वैतंपरमार्थंब्रूते । अतोबहुप्रतिपक्षत्वात्त्वत्पक्षेकथंविश्वासःस्यादित्याशंक्य । न वादिबहुत्वैकत्वंवस्तुनिर्णयेप्रयोजकम् किंतुप्रमाणयुक्तिबाहुल्यमेव । नह्यंधानांसहस्रं चक्षुष्मतएकस्यरूपविषयेप्रतिवादिभवितुमर्हति । प्रमाणयुक्तिबाहुल्यंचास्मत्पक्षएव । इतरत्रचप्रमाणयुक्त्याभासबाहुल्यम् । तच्चसर्वज्ञभगवद्भा-

दरायणप्रणीतब्रह्मसूत्रपर्यालोचनेनातिस्फुटंज्ञातुंश-
क्यतइत्यभिप्रेत्याह ।

युक्त्यालोड्य व्यासवचांस्यत्रहिलभ्यः
क्षेत्रक्षेत्रज्ञांतरविद्भिःपुरुषाख्यः ।
योऽहंसोऽसौ सोऽस्म्यहमेवेतिविदुर्यं
तं संसारध्वांतविनाशंहरिमीडे ॥२८॥

युक्त्येति । व्यासवचांसि "अथातोब्रह्मजि-
ज्ञासा" इत्यादीनि "अनावृत्तिःशब्दादनावृत्तिःश-
ब्दात्" इत्यंतानिब्रह्मसूत्राणि तत्तच्छ्रुतिमूलकानि
आलोड्य सम्यग्विचार्य युक्त्या तर्केणोपलक्षणमेत-
त्प्रमाणेनचाबाधितेन । क्षेत्रक्षेत्रज्ञांतरविद्भिः क्षेत्राणां
देहाद्यहंकारपर्यंतानामंतराणां पृथिव्याद्यव्याकृता-
नांबाह्यानांच क्षेत्रक्षेत्रज्ञयोर्जीवेश्वररूपयोश्चविवेकं ये-
विंदंतितैस्तत्तदुपाधिनिराकरणेन शोधितपदार्थद्वय-
विद्भिरित्यर्थः । पुरुषाख्यः । त्रिविधपरिच्छेदशून्य-
तयापूर्णत्वेन पुरुष इत्याख्यायस्यसपरमात्मा । अत्र-

हि अत्रैवदेहेंद्रियसंघाते तत्साक्षीप्रत्यक्त्वेनलभ्यःवि-
द्ययाप्राप्तुंशक्यः । तद्वेदनप्रकारमेवाह । योऽहमि-
त्यादिना । योऽहंदेहेंद्रियादिसाक्षी सोऽसौ परमेश्वरो
यश्चपरमेश्वरः सोऽस्म्यहमेवेति यंविदुः । प्रत्यगा-
त्मनोभ्रांतिसिद्धाऽब्रह्मत्वव्यावृत्तये ब्रह्मणश्चारोपितप-
रोक्षत्वनिवृत्तयेच परस्परव्यतिहारेणयंविदुरित्यर्थः ।
"तत्त्वमेवत्वमेवतत्" इत्यादिश्रुतेः । अयंभावः ।
सूत्रकारोऽपिभगवान्बादरायणः । "अथातोब्रह्मजि-
ज्ञासा" इतित्रिविधपरिच्छेदशून्यप्रत्यगभिन्नब्रह्मणो-
मुमुक्षुपुरुषविचार्यत्वंप्रतिज्ञाय जिज्ञास्यब्रह्मणः किंल-
क्षणं किंप्रमाणमित्याकांक्षायां । "जन्माद्यस्ययतः"
इतिसूत्रेणलक्षणम् । "शास्त्रयोनित्वात्" इत्यनेनसू-
त्रेणप्रमाणंचोपन्यस्य शास्त्रस्यकार्यपरत्वेन कथंसिद्ध-
ब्रह्मपरत्वमित्याशंकायां । "तत्तुसमन्वयात्" इति
सूत्रेण कार्यपरत्वनिरासपूर्वकं सिद्धब्रह्मपरत्वंबहुवि-
धानेकन्यायैरुपपाद्य पश्चात् "ईक्षतेर्नाशब्दम्" इ-
त्यधिकरणेन जगतःप्रधानकारणत्वंदूरीकृत्य ब्रह्मण्ये-

वसर्वेषांवेदांतानांगतिसामान्यंचप्रतिज्ञाय तदेवगति-
सामान्यम् "आनंदमयोऽभ्यासात्" इत्यारभ्यप्रथम-
द्वितीयतृतीयपादैरन्यार्थत्वशंकानिरसनपूर्वकमुपपा-
द्य चतुर्थपादे कैश्चिदधिकरणैःप्रधानस्याशब्दत्वंप्रपं-
च्य प्रमाणोपन्यासानंतरं तच्चब्रह्मप्रकृतित्वेन जग-
तोनिमित्तत्वेनच "प्रकृतिश्चप्रतिज्ञादृष्टांतानुपरोधा-
त्" इत्यधिकरणेनव्यवस्थाप्य प्रथमाध्यायंसमाप-
यामास। अनंतरंचद्वितीयेप्रथमपादेन स्वपक्षेसांख्य-
योगवैशेषिकादिस्मृतिविरोधंपरिहृत्य तैरुद्भावितस-
कलतर्कविरोधमद्वैतसमन्वयस्यसम्यक्परिजहार। त-
दनुद्वितीयपादेन सांख्यवैशेषिकनैयायिकबौद्धक्षप-
णकपांचरात्रादिपक्षाणांबहुतरासारयुक्त्याभासक-
ल्पितत्वंस्फुटंकैश्चिदधिकरणैःप्रदर्श्य तटस्थेश्वरंचप्रमा-
णयुक्तिशून्यतयाप्रतिचिक्षेप । ततस्तृतीयपादेनभू-
तभोक्तृश्रुतीनां चतुर्थेनलिंगदेहश्रुतीनांच परस्परवि-
रोधंसम्यगपाचकार । एवंद्वितीयाध्यायेनाद्वयसम-
न्वयविरोधंप्रतिक्षिप्य तृतीयाध्यायेप्रथमपादेनसंसा-

रिणइहामुत्रचगत्यागतिनिरूपणपूर्वकं संसारदोषवि-
वेचनेनवैराग्यमधिकारिविशेषणंदृढीकृत्य तदनुद्वितीयपादेनवाक्यार्थज्ञानांगत्वेन जाग्रदाद्यऽवस्थाभ्यो-
विविच्यत्वंपदार्थंप्रदर्श्य । तत्पदार्थमपिसकलद्वैतप्रपंचनिरासपूर्वकंविविच्यप्रदर्शयामास । ततस्तृतीयपादेनविद्याभेदाभेदाभ्यां गुणोपसंहारानुपसंहारौप्रदर्शयन् विधिरूपावांतरवाक्यस्य निषेधरूपावांतरवाक्यस्यच परिमाणन्यायेनप्रदर्श्य । ततश्चतुर्थपादेन "पुरुषार्थोऽतःशब्दादितिबादरायण" इतिप्रथमाधिकरणेन ब्रह्मज्ञानस्यकर्मनिरपेक्षस्यैवमोक्षसाधनत्वंप्रसाध्य तस्यचोत्पत्तावंतरंगसाधनंसंन्यासशांत्यादिकं बहिरंगसाधनंयज्ञादिकंचप्रदर्श्य ज्ञानसाधनमनुतिष्ठतश्च असतिप्रतिबंधेइहैवफलं सतिचतस्मिन्नमुत्रच इत्यंतमाधिकरणेनोक्त्वा तृतीयाध्यायंसमापयामास । ततश्चतुर्थेप्रथमपादेन "आवृत्तिरसकृदुपदेशात्" इत्यधिकरणेनब्रह्मसाक्षात्कारपर्यंतश्रवणाद्यावृत्तिंकर्त्तव्यतया प्रदर्श्य "आत्मेतितूपगच्छंतिग्राहयंतिच" इत्यधि-

करणेनवाक्यार्थंचजीवब्रह्माभेदंसम्यक्प्रदर्श्य । ततः सगुणोपासकस्यक्रममुक्तिमभिधाय द्वितीयपादेनपुनस्तस्यैवोत्क्रांतिप्रकारमुपवर्ण्य तदनुतृतीयेनोत्तरमार्गचिंतापूर्वकं तस्यैवकार्यब्रह्मप्राप्तिंप्रदर्श्य निर्गुणब्रह्मविदश्चगत्युत्क्रांतीप्रतिषिद्ध्य ततश्चतुर्थेननिर्गुणविद्याफलंचब्रह्मलोकेऐश्वर्यमुपपाद्य तेषांसगुणविदुषामंते "अनावृत्तिःशब्दादनावृत्तिःशब्दात्" इतिब्रह्मोपदेशेनमुक्तिंप्रदर्श्योपरराम इत्थंसर्वज्ञबादरायणप्रणीतचातुर्लक्षणीमीमांसायांपरिशीलितायां भेदवादिश्वुनांभषितैरद्वैतकनकाचलस्यनकाचित्क्षतिरिति ॥ २८ ॥

ननुकिमयमधिकारी स्वदेहेंद्रियादिसाक्षिचैतन्यस्यैवब्रह्मत्वंजानीयात् । उत सर्वशरीरादिसाक्षिणामपि । आद्ये किंपुरुषांतरचैतन्यं परमार्थमितिजानातिउत कल्पितमिति । नाद्यः द्वैतप्रसंगात् । नद्वितीयः । तद्दृष्टांतेनस्वस्यापिकल्पितत्वप्रसंगात् । यदिद्वितीयः नतस्योक्तदोषद्वयं किंतुस्वस्यब्रह्मत्वज्ञानेनसंसारनिवृत्तिवदन्येषामपिस्वज्ञानकालेतन्निवृत्तिप्रसं-

गइत्याशंक्य स्वसाक्षिचैतन्यवत्पुरुषांतरचैतन्यस्यापि-ब्रह्मत्वंजानातीतिद्वितीयंपक्षमवलंब्याह ।

एकीकृत्यानेकशरीरस्थमिमंज्ञं
यंविज्ञायेहैवसएवाशुभवंति ।
यस्मिन्लीना नेहपुनर्जन्मलभंते
तं संसारध्वांतविनाशं० ॥२९॥

एकीति । अनेकशरीरस्थं अनेकेषुशरीरेषुदेव-तिर्यगादिषुसाक्षितयास्थितं इमंज्ञं चैतन्यमेकीकृत्य परमात्माऽभिन्नतयाज्ञात्वा ततःसर्वात्मभूतंयंपरमा-त्मानंविज्ञाय देहेंद्रियादिसाक्षिप्रत्यगभिन्नतयाऽपरो-क्षीकृत्य इहैवास्मिन्नेवदेहे आशु तत्कालमेव सएव स-र्वात्मभूतःपरमात्मैवभवंतीत्यर्थः । अत्रश्रुतिः । "यत्प-रंब्रह्मसर्वात्माविश्वस्यायतनंमहत् । सूक्ष्मात्सूक्ष्मतरंनि-त्यंतत्त्वमेवत्वमेवतत् । ब्रह्मवेदब्रह्मैवभवति । तद्योयो-देवानांप्रत्यबुध्यतसएवतदभवत्" इति । अत्रहिमं-

त्रे श्रोतुःप्रत्यगात्मानमनूद्य ब्रह्मादिस्तंबपर्यंतप्रत्यग्भूतसकलजगदधिष्ठानब्रह्मत्वंबोध्यते । नचसर्वेषांप्रतीचांब्रह्मत्वज्ञानेस्वस्मिन्निवपरेष्वपिसंसारनिवृत्तिप्रसंगदोषः। किंब्रह्मविद्दृष्ट्यातन्निवृत्तिरापाद्यते उत परदृष्ट्या। नांत्यः परेषांस्वात्मनोब्रह्मत्वज्ञानाभावेन तद्दृष्ट्यानतेषुसंसारनिवृत्तिः । ब्रह्मविद्दृष्ट्यातन्निवृत्तिस्त्विष्टैव । यदाब्रह्मवित्स्वदेहेंद्रियादिसाक्षिणमसंगं निर्विकारासंसारिब्रह्मत्वेनपश्यति तदापरदेहेंद्रियादिसाक्षिणमपितथैवपश्यति । तदुक्तंब्रह्मगीतायाम् । "स्वशरीरेऽन्यदेहेषु समंनिश्चित्यतंदृढम् । अथधीरानजायंते ह्यमृताश्चभवंतिहि । बद्धोमुक्तोमहान्विद्वानऽज्ञइत्यादिभेदतः । एकएवसदाभाति चेतनःस्वप्नवत्स्वयम् । अतःस्वमुक्त्याचान्येषामाभासानामपिध्रुवम् । मुक्तिंजानातिदेहेवाआत्मानमात्मविद्वरः । संसारस्यदशायांतु स्वभ्रांत्यासर्वदेहिनाम् । आभासानांचसंसारं वेदमुक्तिंतथैवचेति"। अतोब्रह्मादिस्तंबांतप्रत्यग्भूतंसर्वाधिष्ठानंब्रह्मात्मत्वेनजानतः पुरु-

षस्य स्वदेहेपरदेहेवानसंसारइतिभावः । ननु ब्रह्मज्ञानान्निवृत्तस्यापिसंसारस्यकदाचित्पुनरुद्भवःस्यात्सुषुप्तिप्रलययोर्निवृत्तस्यप्रबोधेपुनरुद्भवदर्शनादित्याशंक्याह । यस्मिन्नित्यादिना । यस्मिन्ब्रह्मणिलीनाउपाधिपरित्यागेनैकीभूता इह संसारे पुनर्जन्मनलभंते नप्राप्नुवंति तमित्यर्थः । "नसपुनरावर्तते" इत्यादिश्रुतेः । सुषुप्त्यादौसंसारकारणाज्ञानानिवृत्तेरत्रचतत्त्वज्ञानेनतन्निवृत्तेर्दृष्टांतदार्ष्टांतिकयोर्वैषम्यमितिभावः ॥ २९ ॥

बृहदारण्यकेचतुर्थाध्यायेमधुब्राह्मणेएवंश्रूयते । "इयंपृथिवीसर्वेषांभूतानांमधु अस्यैपृथिव्यैसर्वाणिभूतानिमधु यश्चायमस्यांपृथिव्यांतेजोमयोऽमृतमयः पुरुषोयश्चायमध्यात्मंशारीरस्तेजोमयोऽमृतमयःपुरुषोऽयमेवसः योऽयमात्मेदममृतमिदंब्रह्मेदंसर्वं । इमाआपअयमग्निःअयंवायुरयमादित्य" एवंबहवःपर्यायाःश्रूयंते । तत्रप्रथमपर्यायस्यायमर्थः । इयंमहापृथिवीसर्वेषांभूतानांमधु मधुवदुपभोग्यं यथामाक्षि-

काणामेकंमधुपटलंतद्वत् । तथा अस्यैपृथिव्यै अस्याःपृथिव्याः सर्वाणिभूतानिमधु अनेनपृथिव्याभूतानांचपरस्परभोग्यत्वेनपरस्परकार्यकारणत्वमुक्तं ततस्तदुभयंमिथ्येत्यर्थः । तदुभयोपहितपुरुषस्यैकत्वमाह । यश्चेत्यादिना । यश्चायमस्यांपृथिव्यांतेजोमयश्चैतन्यप्रकाशरूपः अमृतमयः उपाधिनाशेऽपि स्वयममरणधर्मापुरुषः यश्चायमध्यात्मंशारीरः स्थूलशरीरोपाधिकः तेजोमयोऽमृतमयःपुरुषः । अयमेव सः पृथिव्युपाधिकःपुरुषः । अयंशब्दार्थमाह । योयमात्मेति । आत्मास्थूलशरीरोपाधिकः। अध्यात्माधिदैवतोपाधिभेदादेवानयोर्भेदोनस्वरूपतइत्यर्थः। इदमुपाधिद्वयोपहितचैतन्यममृतमविनाशि । ततइदंब्रह्म जगत्कारणभूतमतएवतदुपाधिद्वयोपहितचैतन्यमेवसर्वंसकलंजगन्नतद्व्यतिरेकेणसर्वमस्तीत्यर्थः । एवंसर्वेषुपर्यायेषुद्रष्टव्यम् । अपरपर्यायेत्वंऽबुरेतउपहितयोरेकत्वं ततोऽग्निवाय्वुपहितयोरेकत्वं । ततःसूर्यचक्षुरुपहितयोः एवंसर्वत्रपर्यायेषुअध्यात्माधिदैवतोपहि-

तद्द्वंद्वानामेकत्वकथनपूर्वकं यत्सर्वात्मकंब्रह्मप्रतिपादितंतंविष्णुमिदानींस्तौति ।

द्वंद्वैकत्वं यच्च मधुब्राह्मणवाक्यैः कृ-
त्वाशक्रोपासनमासाद्यविभूत्या ।
योऽसौसोऽहं सोऽस्म्यहमेवेतिविद्वु-
र्यं तं संसारध्वांतविनाशं० ॥ ३० ॥

द्वंद्वैकत्वमिति । मधुब्राह्मणवाक्यैर्यश्चायमस्यामित्यादिभिः प्रतिपर्यायमध्यात्माधिदैवत्वं द्वंद्वैकत्वमुक्तम् । द्वंद्वानां पृथिवीशरीराग्निवागाद्युपहितानांयदैक्यंकथितं तत्कृत्वा गृहीत्वा तद्ग्रहणप्रयुक्त्या विभूत्या ईश्वरभावप्रतिपत्त्या शक्रोपासनं शक्रेणइंद्रेणस्वस्योपासनमासाद्य प्राप्य । "यस्त्वेवंब्राह्मणोविद्यात्तस्यदेवाअसन्वशे" वशेआसन्नित्यर्थः । इतिश्रुत्युक्तंदेवपशुत्वव्यावृत्त्येश्वराभेदेन देवैरुपास्यत्वंप्राप्येत्यर्थः । योऽसौसर्वात्मापरमेश्वरः सोऽहं योऽहमस्मिबुद्ध्यादिसाक्षी सोऽसौपरमेश्वर इतिपरस्पर-

व्यतिहारेण यं परमेश्वरं विदुः साक्षादनुभवंति । तमीडे । शक्रोपासनमासाद्ययंविदुरितिप्रयोगो मुखंव्यादायस्वपितीतिवद्द्रष्टव्यः ॥ ३० ॥

"तद्योऽहंसोऽसौयोऽसौसोऽहंत्वंवाहमस्मिभगवोदेवतेअहंवैत्वमसि भगवोदेवते" इत्यादिश्रुतिभिःपरस्परव्यतिहारेणोपास्यत्वेनप्रतिपादितंविष्णुंस्तौति ।

योऽयंदेहेचेष्टयितांतःकरणस्थः
सूर्येचाऽसौ तापयितासोऽस्म्यहमेव
इत्यात्मैक्योपासनयायंविदुरीशं
तं संसारध्वांतविनाशंह० ॥ ३१ ॥

योऽयमिति । योऽयंदेहे शरीरेचेष्टयिता चेष्टाहेतुर्वर्तते जडदेहचेष्टालिंगगम्योऽयंतद्धेतुत्वेनचेतनोवर्तते । असंगस्यतस्यचेष्टाहेतुत्वमुपपादयति । अंतःकरणस्थइति । अंतःकरणोपाधिकइत्यर्थः । असावंतःकरणोपहितएव । सूर्येचाऽसौतापयिता तपतःसूर्यस्यप्रयोजककर्तृत्वेनांतर्यामीभवति । यश्चसू-

यैंतापयितासोऽहमेवास्मीत्यनेनप्रकारेणात्मैक्योपा-
सनया परस्परव्यतिहारेणात्मैकत्वचिंतनेन यमीशं-
विद्वुस्तमीडइत्यर्थः ॥ ३१ ॥

उपास्यत्वाभिधानेनवेद्यताशंकांप्राप्तामपाकरोति ।

विज्ञानांशो यस्यसतःशक्त्यधिरू-
ढो बुद्धिर्बुद्ध्यत्यत्रबहिर्बोध्यपदा-
र्थान् । नैवांतस्थंबुद्ध्यतियंबोध-
यितारं तं संसारध्वांतवि० ॥ ३२ ॥

विज्ञानांशइति । संतःपरमार्थसद्रूपस्यपरमे-
श्वरस्य विज्ञानांशः । विज्ञानस्यस्वरूपज्ञानस्यांशइ-
वांशो ब्रह्मणोनिरवयवत्वात् । शक्त्यधिरूढो ब्रह्म-
णोऽविद्याशक्तिप्रतिबिंबितोजीवः । बहिरुपलक्षणमं-
तश्च बोध्यपदार्थान् । बुद्धितद्धर्मान्घटपटादींश्च अत्र
जगति बुद्ध्यति जानाति । बुद्धिस्तु अंतस्थं स्व-
स्यांतर्वर्तमानं बोधयितारं बाह्यपदार्थबोधेस्वस्याः
बोद्धृत्वप्रदातारं चैतन्यसंबंधंविनाजडायाःस्वस्याःबो-

द्धृत्वानुपपत्तेः। यंस्वयंप्रकाशचिद्रूपं नबुद्ध्यति न-
जानाति तमित्यर्थः। अत्रश्रुतिः। "विज्ञातारमरेके-
नविजानीयात् येनेदंसर्वंविजानातितंकेनविजानी-
यात्। नहिविज्ञातेर्विज्ञातारंविजानीयात्" इत्या-
दि। अस्यचायमर्थः। अरेमैत्रेयि विज्ञातारं बाह्याभ्यं-
तरपदार्थानांस्वप्रकाशचिदात्मकस्वस्वरूपेणैवभास-
यितारं केन करणेन विजानीयात्पुरुषः। करणस्यम-
नआदेर्ज्ञेयविषयत्वेन ज्ञातृविषयत्वाभावादित्यर्थः।
करणस्यापिस्वतोज्ञातृत्वंनास्ति किंतुचैतन्यबलेनैवे-
त्याह। येनेत्यादिना। इदंसर्वंजगद्बुद्ध्यारूढचैतन्येन-
विजानाति पुरुषस्तंकेनविजानीयान्नकेनापीत्यर्थः।
विज्ञातेर्बुद्धेर्विज्ञातारंबोद्धारं नविजानीयात्। विज्ञाने-
ननविषयीकुर्यादिति उषस्तंप्रतियाज्ञवल्क्यवचनं पूर्व-
वाक्यंमैत्रेयींप्रतितस्यैवेति। "दृश्यतेत्वग्र्ययाबुद्ध्या"
इत्यादेस्तु एतच्छ्रुत्यविरुद्धोऽर्थःपूर्वमुक्तएवद्रष्टव्यः।
उपास्यत्वमपिआत्मनस्तादृशवृत्तिप्रवाहव्याप्यत्वमेव
नतुतत्प्रतिबिंबचैतन्यविषयत्वमितिद्रष्टव्यं॥ ३२॥

नकेवलमुक्तश्रुत्यैवात्मनोज्ञातृत्वसिद्धिः । किंतु-श्रुत्यनुकूलतर्कतोऽपि ज्ञेयस्यघटादिवदनात्मत्वेनज्ञातृत्वायोगात्तत्सिद्ध्यतीत्याह ।

कोऽयंदेहेदेवइतीत्थंसुविचार्य ज्ञा-
ताश्रोतानंदयिताचैषहिदेवः । इ-
त्यालोच्य ज्ञांशइहास्मीतिविदु-
र्यं तं संसारध्वांतविनाशं० ॥ ३३ ॥

कोऽयमिति । देहे कार्यकारणसंघातमध्ये कोऽयंदेवः कोवाज्ञाता किंशरीरं उतइंद्रियाणि अथप्राणः यद्वांऽतःकरणमिति । इत्थमनेनप्रकारेण सुविचार्य सुष्ठुसम्यग्विचार्य देहादीनांवेद्यत्वेन घटादिवत्ज्ञातृत्वाभावंनिश्चित्य एष अपरोक्षतयानित्यभासमानः देवः स्वप्रकाशचिद्धातुरेव ज्ञाताश्रोतानंदयितेत्यालोच्य आलोचनेनज्ञात्वा । इहएषुदेहादिषुमध्ये ज्ञांशश्चैतन्यांशोऽस्मीतियंविदुस्तमित्यर्थः । "अदृष्टोद्रष्टाऽश्रुतःश्रोताऽमतोमंताऽविज्ञातोविज्ञाता" इ-

त्यादिश्रुत्यास्वयंदर्शनाद्यऽविषयस्यैवद्रष्टृत्वाद्युपपादनादितिभावः ॥ ३३ ॥

"कोह्येवान्यात्कःप्राण्याद्यदेषआकाशआनंदोनस्यात्। एषह्येवानंदयाति" इतितैत्तिरीयकश्रुतिः। अस्याश्चायमर्थः। यत् यदिएषआकाश आसमंतात् काशतइत्याकाशश्चैतन्यम्। यद्वा आकाशवदसंगत्वविभुत्वादिधर्मैर्योगादाकाशश्चिद्धातुः आनंदः सुखरूपआत्मानस्यात्तदा कोहिपुरुषोऽन्यादपानचेष्टांकुर्यात्प्राण्यात्प्राणव्यापारंकुर्याद्रुपलक्षणमेतत् सकलकार्यकरणव्यापारंकःकुर्यादित्यर्थः। रथाद्यऽचेतनप्रवृत्तेश्चेतनाधिष्ठाननिबंधनत्वदर्शनात्। जीवनस्यचानंदपूर्वकत्वदर्शनात् दुःखेसति प्राणवियोगादेरेवदृष्टेरितिभावः। तदेवाह। एषह्येवाकाशएवहियस्मादानंदयाति। आनंदयति। अतःसर्वोजनःप्राणितिचापानिति। यदिप्राणिनांकदाचित्स्वरूपानंदोऽभिव्यक्तोनस्यात्। अतिदुःसहसंसारदुःखंसोढ्वापिजीवनप्रार्थनानस्यात्। तदाशयैवजीवनमाशास्ते

सर्वोजनइत्यनयाश्रुत्यापिचेष्टाजीवनहेतुत्वेनचिद्रूपानंदआत्मासाध्यतइत्याह ।

कोह्येवान्यादात्मनिनस्यादयमेष
ह्येवानंदःप्राणितिचापानितिचेति ।
इत्यस्तित्वंवक्तयुपपत्त्याश्रुतिरेषा
तं संसारध्वांतविनाशं० ॥ ३४ ॥

कोह्येवेति । आत्मनिकार्यकारणसंघाते । अयं चिद्रूपानंदआत्मायदिनस्यात्तर्हि कोह्येवपुरुषोऽन्यात् अपानादिव्यापारंकुर्याज्जडप्रवृत्तेश्चेतनपूर्वकत्वाज्जीवनस्यानंदहेतुकत्वाच्चेत्यर्थः । अतएषह्येवानंदः परमात्मा जीवभावापन्नःप्राणितिचापानिति चेति । एवंहेतुत्वेनयस्यास्तित्वमुपपत्त्याएषातैत्तिरीयकश्रुतिर्वक्तितमित्यर्थः ॥ ३४ ॥

ऐतरेयकश्रुतिर्हिभगवती "आत्मावाइदमेकएवाग्रआसीत्" इत्यद्वितीयंब्रह्मोपक्रम्य तस्याद्वितीयत्वसिद्धये "सईक्षत" इत्यादिना ईक्षणपूर्वकंतत

एवलोकसृष्टिमुक्त्वा ततः "सईक्षतेमेनु" इत्यादिना कार्यकारणदेवतानांसृष्टिमुक्त्वा ततोवैराग्यार्थंतासांदेवतानामशनायापिपासादिमत्संसारार्णवपतनंदर्शयित्वाततोऽशनायादिनिवृत्तये "अन्नमेतेभ्यःसृजा" इत्यादिना अन्नसृष्टिमुक्त्वा तदनुविचार्यापानस्यैवतदऽन्नंप्रतिभोक्तृत्वंप्रदर्श्य सृष्टानांतेषांकार्यकारणदेवतानामीश्वरप्रवेशंविनास्वस्वकार्येऽसमर्थत्वेन मूर्धसीमाविदारणेनेश्वरस्यतत्रप्रवेशमुक्त्वा । पुनस्तत्रप्रविश्य तादात्म्याभिमानेनसंसरतोजीवरूपमापन्नस्यपरमेश्वरस्यानंतपूर्वजन्मकृतपुण्यपुंजपरिपाकवशाद्विविदिषायांसत्यां "यदिवाचाभिव्याहृतम्" इत्यादिनावागादीनामात्मत्वनिराकरणपूर्वकमथकोऽहमित्यात्मविचारमुपक्रम्य । "तस्यत्रयःअवसथास्त्रयःस्वप्नाः" इत्यवस्थात्रयस्यमिथ्यात्वमुक्त्वा "सएतमेवपुरुषम्" इत्यनेन वागादिभ्योऽवस्थात्रयाच्चविविक्तं तत्सकलसाक्षिणं चिन्मात्रमादाय "ब्रह्मततमम-पश्यदिति" । तस्यब्रह्मत्वबोधनंजीवस्योक्त्वा पुन-

श्वएतमेवार्थं "पुरुषेहवाअयमादितोगर्भोभवति" इ-
तिवैराग्योपपादनपूर्वकं "कोऽयमात्मेतिवयमुपास्म-
हे" इतिवाक्येनमूर्धप्रपदद्वाराप्रविष्टयोर्जीवप्राणयो-
श्चिक्रियाशक्त्यात्मकयोर्मध्येकतरःसआत्मेतिविमृश्य
"येनवापश्यति" इत्यादिनाचैतन्यस्यैवत्वंपदार्थत्वंनि-
र्धार्य तत "एषब्रह्म" इत्यादिना सर्वात्मकंतत्पदा-
र्थंब्रह्मोपदिश्य "प्रज्ञाप्रतिष्ठा प्रज्ञानं ब्रह्म" इति त-
योरैक्यमुक्त्वाप्रपंचयामास । इत्थमैतरेयकश्रुत्यावि-
चारपूर्वकंसंग्रहविस्ताराभ्यांप्रतिपादितंविष्णुंस्तौति
श्लोकद्वयेन ।

प्राणोवाहं वाक्श्रवणादीनिमनो-
वा बुद्धिर्वाहं व्यस्तउताहोऽपिस-
मस्तः । इत्यालोच्य ज्ञप्तिरिहा-
स्मीतिविदुर्यं तं सं० ॥ ३५ ॥

प्राणइति । बुभुक्षितःपिपासितोऽहंवच्मिश्रृ-
णोमिमन्येबुद्ध्यइत्यनुभवात्प्राणादीनिप्रत्येकमहं त-

त्समुदायोवा उतएतत्सकलसाक्षीत्यालोच्य प्राणादि-
भिन्नतत्साक्षीज्ञप्तिरेवास्मीति यं विद्रुस्तमित्यर्थः॥३५॥

नन्तु प्राणादिष्वप्यहमित्यात्मत्वानुभवात्कथंचैत-
न्यस्यात्मत्वमित्याशंक्याह ।

नाहंप्राणोनैवशरीरंनमनोऽहं नाहं-
बुद्धिर्नाहमहंकारधियौच । योऽत्र-
ज्ञांशः सोऽस्म्यहमेवेति विदुर्यं तं
संसारध्वांतविनाशंहरिमीडे ॥ ३६ ॥

नाहमिति । अत्रधीशब्देनचित्तमुच्यते प्रा-
णादिचित्तपर्यंताःनात्मानो दृश्यत्वाद्भौतिकत्वात्सा-
वयवत्वान्ममेदंबुद्धिविषयत्वात्सुषुप्त्यादावात्मनिसत्य-
पितेषामदर्शनात् । उपचयधर्मत्वाच्चघटादिवत् किंतु-
योऽत्रदृश्यत्वादिधर्मरहितःप्राणादिसकलसाक्षी तेषु-
व्यभिचरत्सुस्वयमव्यभिचारिचिद्धातुः सएवाहमस्मि ।
वच्मीत्यादिप्रतीतिस्तु रक्तःस्फटिकइतिवद्भ्रांत्याप्युप-
पद्यते इतियंविद्रुस्तमित्यर्थः ॥ ३६ ॥

तथाभगवतीछांदोग्यश्रुतिश्च उद्दालकश्वेतकेतुसंवादमुखेन "उततमादेशमऽप्राक्ष्योयेनाश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातम्" इति । हेश्वेतकेतो येनश्रुतेनशास्त्रतोऽन्यदश्रुतमपिश्रुतंभवति येनमतेनतर्कतोऽन्यदमतमपिमतंभवति येनविज्ञातेनान्यदविज्ञातमपिविज्ञातंभवति तमादेशं आदिश्यतइत्यादेशस्तंशास्त्राचार्योक्तिगम्यंवस्त्वऽप्राक्ष्यःपृष्टवानसित्वमाचार्यमितिपितृवाक्यार्थः । येनाश्रुतंश्रुतंभवतीत्येकविज्ञानेनसर्वविज्ञानंप्रतिज्ञाय तदेव "कथंनुभगवःसआदेशोभवति" इत्याशंकापूर्वकं । "यथासौम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यम्" इत्यादिनादृष्टांतैरुपपाद्य ततो दार्ष्टांतिकंप्रपंचयितुं "सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयम्" इतिसजातीयविजातीयस्वगतभेदशून्यंसद्वस्तूपक्रम्य तद्धैकेआहुरित्यसद्वादमाशंक्य । "कथमसतःसज्जायेत" इतितंप्रतिषिध्य सद्रूपस्यब्रह्मणोजडविजातीयभेदाभावमुपपादयितुं "तदैक्षतबहु-

स्यांप्रजायेय" इत्यादिनावियदादेःसर्वस्यततएवसृष्टि-
मुक्त्वासजातीयभेदनिराकरणायतस्यैवजीवरूपेणप्र-
वेशंचाभिधाय त्रिवृत्करणपूर्वकंनामरूपसृष्टिंचोक्त्वा
ततोब्रह्मणःस्वकार्याकाशादितोभेदव्यावृत्तये "यद-
ग्नेरोहितंरूपम्" इत्यादिना वियदादेःसर्वस्यजगतोमि-
थ्यात्वमुक्त्वा ततोदेहवाक्प्राणमनसामन्नादिकार्यत्वे-
नानात्मत्वमुक्त्वा "सयएषोऽणिमैतदात्म्यमिदंसर्वंत-
त्सत्यंसआत्मातत्त्वमसि" इत्यादिनाश्वेतकेतुंद्वारीकृ-
त्य मुमुक्षूणांजीवानामात्मत्वेनसदद्वितीयमतिसूक्ष्मं-
सर्वात्मकंपरमार्थसत्यंब्रह्मतत्तदाशंकानिराकरणपूर्व-
कंनवकृत्वःपुनःपुनरुपदिदेश । तथाहि । "प्रयतोवा-
ङ्मनसि" इत्यादिना सुषुप्त्युत्क्रांताद्यवस्थासुयेनरूपेण
जीवःसंपद्यतेतद्ब्रह्मतत्त्वमसीति पित्रोपदिष्टे सुषुप्तौ
सत्संपन्नाप्रजास्तद्ब्रह्मात्मत्वंकिमितिनविदुरितिश्वेत-
केतोराशंकायां । "यथासौम्यमधुमधुकृतः" इत्या-
दिनामधुकरैर्मधुत्वेनसमाहृतनानावृक्षरससमुदायव-
द्विवेक्तुमशक्यत्वेनसुषुप्त्यादौप्राप्तमपिब्रह्मनज्ञायते इ-

तिनिरस्यतदेवतत्त्वमुपदिश्य । ननुसुषुप्त्यादौकरणा-
भावादविज्ञानंउत्थितास्तुब्रह्मणोवयमुत्थिताइतिक-
स्मान्नजानीयुरित्याशंकायां "इमाःसौम्यनद्यः" इत्या-
दिना यथाजलधरैरंभोधितआकृष्यविसृष्टानांनदीनां
रसान्यत्वेनसमुद्रादागमनंदुर्ज्ञानम् । एवंब्रह्मणउत्थि
तानांसंसारिणांतद्वैलक्षण्यात्तदात्मनावस्थायोत्थिता
वयमितिनज्ञानमितिपरिहारेणपुनस्तदेवोपदिश्य त-
थासुषुप्तौजीवस्यकारणभावापत्तौसमुद्रवीच्यादिवन्ना-
शशंकायाम् "अस्यसौम्यमहतोवृक्षस्य" इत्यादिना
यथावृक्षस्यपरश्वादिनोच्छेदेरसस्राविवात्सजीवत्वंत-
थासुप्तेदेहेपिलोहितदर्शनान्नजीवनाशइतिपरिहारेण
प्रागुक्तएवार्थे स्थापिते पुनःकथंसूक्ष्माद्ब्रह्मणःस्थूलज-
गदुत्पत्तिरितिशंकां "न्यग्रोधफलमतआहर" इत्या-
दिनावटधान्यांतरागतसूक्ष्मरूपाद्वटोत्पत्तिवज्जगदुत्प-
त्तिसंभवेननिराकृत्यपुनस्तस्मिन्नेवाऽर्थेस्थापिते पुन-
र्जगन्मूलकारणंब्रह्मकिमितिनोपलभ्यतेइतिशंकिते
"लवणमेतदुदकेऽवधाय" इत्यादिनाउदकप्रक्षिप्तल-

वणघनस्यदर्शनस्पर्शनाभ्यामनुपलंभेऽपिरसनालवण सद्भावनिश्चयवच्चक्षुराद्यऽदृश्यमपिब्रह्मकार्यलिंगाद-स्तीत्युक्त्वातदेवोपदिष्टम् । ततोब्रह्मसाक्षात्कारेकउ-पायइत्याशंकायां "यथासौम्यपुरुषंगंधारेभ्यः" इ-त्यादिनागंधारदेशादरण्येचौरैर्निक्षिप्तस्यबद्धचक्षुषःपु-रुषस्यनेत्रबंधमोक्षकगंधारोपदेशवदाचार्यकृताद्रुपदे-शाद्ब्रह्मसाक्षात्कारोऽविद्यानिवृत्तिश्चेत्युक्त्वातदेवोप-दिष्टम्। ततःसविद्वान्केनप्रकारेणब्रह्मसंपद्यतेइत्यपेक्षा-यां "पुरुषंसौम्योतोपतापिनम्" इत्यादिनामनआदे-र्लयेसतिज्ञानदीपप्रकाशितंब्रह्मैवप्रतिपद्यते नार्चिरा-दिकमपेक्षते । अविद्वांस्तुदेहांतरंगृह्णातीत्युक्त्वातदे-वोपदिदेश । तदनु यदिमरिष्यमाणोमोक्षमाणश्चत-दाब्रह्मसंपद्यते तर्हिअविद्वानिवविद्वानपिकिमिति नावर्ततेइत्याशंकायां "पुरुषंसौम्योतहस्तगृहीतमा-नयंति" इत्यादिनातप्तपरशुंगृह्णतोःस्तेनास्तेनयोस्त-प्तपरशुकरतलसंयोगाविशेषेऽपि सत्यव्यवहितहस्त-तलत्वादस्तेनोनदह्यतेस्तेनस्तुदह्यतएवमंतकालेविद्व-

दविद्वषोःसमानायामपिसत्संपत्तौ सत्यब्रह्माभिसंधिः पुनर्नदेहंगृह्णाति । अनृतदेहाद्यात्मबुद्धिस्तुपुनः शरीरमुपादत्तेइतिपरिहारपूर्वकं तदेवत्वंतत्त्वमसीत्युपदिदेश । स्वगतभेदस्तुब्रह्मणिनिरवयवेनिर्धर्मकेनसंभवतीतिश्रुत्योपेक्षितः । एवंछांदोग्यश्रुत्याभगवत्यासाद्युक्तोशंक्रमेणैकएवाद्वितीयोनवभिःपर्यायैःसन्मात्रप्रत्यगभिन्नोविष्णुःप्रतिपादितस्तमिदानींस्तौति ।

सत्तामात्रं केवलविज्ञानमजंसत् सू
क्ष्मंनित्यं तत्त्वमसीत्यात्मसुताय ॥
साम्नामंते प्राहपितायंविभुमाद्यंतं
संसारध्वांतविनाशंहरिमीडे ॥३७॥

सत्तेति । सत्तामात्रमस्मीतिप्रत्ययवेद्यं सदेवेतिश्रुतेः । केवलविज्ञानंविषयनिर्मुक्तंचिद्रूपं वाचारंभणमित्यादिश्रुत्याविषयस्यमिथ्यात्वात् । तदैक्षतेतिश्रुतेश्च । नह्यचिद्रूपस्येक्षणंसंभवति । अजंजन्मरहितं । अग्रेआसीदितिश्रुतेः सत्सत्यं तत्सत्यमिति-

श्रुतेः । सूक्ष्मंइंद्रियाद्यविषयम् । सयएषोणिमेतिश्रुतेः । नित्यंनाशरहितं । नजीवोम्रियतइतिश्रुतेः । विभुंसर्वव्यापकं । सआत्मेतिश्रुतेः । आद्यंजगतोनिमित्तोपादानकारणम् । तदैक्षतप्रजायेयेतिश्रुतेः । एवंभूतंयंविष्णुंसाम्नामंतेसामोपनिषदिपिताउद्दालकनामाऋषिः । आत्मसुतायस्वपुत्रायश्वेतकेतुनाम्नेहेश्वेतकेतो तत्त्वमसीतिउक्तरूपंब्रह्मभवसिइत्येवंप्राहप्रकर्षेणपुनःपुनराहोपदिष्टवांस्तमीडइत्यर्थः ॥ ३७ ॥

बृहदारण्यकेमूर्त्तामूर्त्तब्राह्मणे । "द्वेवावब्रह्मणोरूपेमूर्त्तंचामूर्त्तंच" इत्युपक्रम्यानंतरंच "तदेतन्मूर्त्तंयदन्यद्वायोश्चांतरिक्षाच्च" इतिमूर्त्तपदंव्याख्याय तदनु अथामूर्त्तंवायुश्चांतरिक्षंचेत्यमूर्त्तपदंव्याख्याय ततोयथाक्रममनित्यनित्यपरिच्छिन्नव्यापकप्रत्यक्षपरोक्षरूपेणतद्रूपद्वयंप्रदर्श्य ततःसमष्टिव्यष्ट्यात्मकस्थूलसूक्ष्मशरीरद्वयंचमूर्त्तामूर्त्तात्मकपंचभूतकार्यत्वेनप्रदर्श्यारोपंप्रपंच्यांतेतद्रूपद्वयमपोहितम् "अथातआदेशोनेतिनेतीतिनह्येतस्मादिति" । नेतीतिअपवादवाक्यस्य-

चायमर्थः। अथ ब्रह्मणोरूपद्वयनिरूपणानंतरमतःऽय-तोऽरूपिब्रह्मनिरूपयितव्यंतदर्थमेवरूपद्वयनिरूपणा-त्। अतोहेतोरादेश उपदेशोब्रह्मणःक्रियतइतिशेषः। कथं।नेतिनेति इतिशब्दौप्रत्यक्षादिसंनिधापितमूर्त्ता-मूर्त्ततद्वत्थलिंगपुरुषपरौयथाक्रमंद्रष्टव्यौ । नञ्पदद्व-यनिषेध्यसमर्पकौतयोरेवप्रकृतत्वाद्विशेष्यत्वेन।ब्रह्मण-स्तुविशेषणत्वात्प्रकृतत्वेऽपिननिषेध्यत्वेनसंबंधः । त-थाचनञ्द्वयेनोक्तरूपद्वयनिषेधेनब्रह्मोपदिश्यते।ननु-कथमनेनब्रह्मोपदिश्यते रूपद्वयनिषेधमात्रस्यैवप्रतीते-स्तत्राह।नहीति। एतस्मान्निषेधरूपादुपदेशादन्यउ-पदेशोनास्तिब्रह्मणोनिर्विशेषत्वेनविधिशब्दागोचर-त्वादित्यर्थः।विधिःश्रोतव्यादिः।ननुतर्हिब्रह्मनास्ती-तिप्राप्तंतत्राह। अन्यत्परमस्तीति निरवधिकनिषे-धायोगात्मूर्त्तामूर्त्तरूपद्वयनिषेधावधिभूतमन्यद्रूपद्व-यव्यतिरिक्तंब्रह्मास्तीतिगम्यतइत्यर्थः । अथवानेति-नेतीतिवीप्सातयाचयद्यद्विषयत्वेनप्राप्तंतत्तत्सर्वंनेति-नेतीतिनिषिध्यते।शेषंपूर्ववत् इत्थंविषयत्वेनप्राप्तंसर्वं-

निषिध्यनिर्विशेषोऽविषयःप्रत्यगभिन्नोयोविष्णुर्मूर्त्ता-मूर्त्तब्राह्मणेप्रतिपादितस्तमिदानींस्तौति ।

मूर्त्तामूर्त्ते पूर्वमपोह्याथसमाधौ दृ-
श्यंसर्वं नेतिचनेतीतिविहाय ॥ चैत
न्यांशे स्वात्मनिसंतंचविदुर्यं तं
संसारध्वांतविनाशं हरिं० ॥ ३८ ॥

मूर्त्तामूर्त्ते इति । समाधौसमाधीयतेचित्तमस्मिन्नसमाधिर्विष्णुश्चैतन्यांशेचैतन्यमेवांशइवांशोजडांशपरित्यागेअवशिष्यमाणंचिन्मात्रमित्यर्थः । तस्मिन्स्वात्मनिप्रत्यगभिन्नेविष्णौआरोपितेयेमूर्त्तामूर्त्तेपंचभूतात्मकेतेनेतिनेतीतिअपोह्यनिषिद्ध्य। नेतिनेतीतिवाक्यस्यार्थांतरमाह । अथेत्यादिना । अथशब्दःपक्षांतरेअथवाइत्यर्थः । नेतिनेतीतिवीप्सातयादृश्यंसर्वंविहायदृश्यत्वेनप्राप्तंसर्वंनिषिध्येत्यर्थः । एवमेतंनिषेधावधिभूतत्वेनसंतंविद्यमानंयंविदुः । चकारात्पूर्वोक्तसत्यमित्यादिवाक्येनविधिमुखेनचयंविदुरि-

त्यर्थः । तदुक्तंसूत्रकारेण । "प्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीतिचभूयः" इतिप्रकृतंयदेतावत्त्वं रूपेयेयत्तास्तिरूपद्वयमित्यर्थः । तदेवनेतिनेतीतिवाक्यंप्रतिषेधतिनतुब्रह्मेत्यर्थः । हियस्मात्ततःपरंचभूयःपुनर्ब्रवीतिअन्यत्परमस्तीति तस्माद्रूपद्वयस्यैवनिषेधोनब्रह्मणइतिसूत्रार्थः ॥ ३८ ॥

बृहदारण्यकेश्रूयते । याज्ञवल्क्येनोषस्तकहोलादीनांपराजये गार्गीनाम्नीब्रह्मविदुषीकाचिद्ब्राह्मणीआगत्यब्राह्मणेभ्योऽनुज्ञांप्राप्ययाज्ञवल्क्यंपप्रच्छ । उत्तरदानेअवाच्यवचनंनामनिग्रहस्थानं तददानेचाप्रतिभानामनिग्रहस्थानमित्युभयथायाज्ञवल्क्यस्यपराजयंमन्वाना हेयाज्ञवल्क्य सर्वमिदंजगद्भूतंभवच्चभविष्यच्चयत्राव्याकृताकाशेवर्त्तते सोऽव्याकृताकाशःकुत्राध्यस्तइति । याज्ञवल्क्यश्चतस्याअभिप्रायंज्ञात्वाएकदैवदोषद्वयंपरिहरन्नाह । "एतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंतिअस्थूलमनण्वऽह्रस्वमदीर्घमलोहितमस्नेहमिति" ब्राह्मणाअभिवदंतीत्यनेनस्वस्यावाच्य-

वचनदोषःपरिहृतः । स्थौल्यादिसकलधर्मरहिताक्षर-कथनेनाप्रतिभाचपरिहृता । ततोयावदितरसकल-निषेधमात्रादक्षरसिद्धिरिति । तस्यासत्वशंकायां स-कलनिषेधावधित्वेन तत्सत्वमभिप्रेत्य । "एतस्यवाऽक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठतः" इत्यादिनाद्यावापृथिव्यौनिमेषादिकालश्चनद्यः समुद्रादेवाःपितरश्चाक्षरस्यप्रशासनेवर्त्तंते । सकलमर्यादा-विधारकत्वेनाक्षरसत्वमुक्त्वा । योवाएतदक्षरंगार्ग्य-विदित्वेत्यादिनाचयदज्ञानात्संसारकार्पण्यं यज्ज्ञाना-च्चतन्निवृत्तिरस्तितदक्षरमित्युक्त्वा । कुतस्तर्हितन्नानु-भूयतइत्याशंकायां दृष्ट्याद्यविषयत्वेऽपिसर्वसाधकत्वे-नस्वयंभासमानंतदस्तीतिद्रष्टृतरंनिषेधयन् । अदृष्टंद्र-ष्टृनान्यदतोऽस्तिद्रष्टॄत्यादिनाऽक्षरसद्भावंगार्गींप्रति-प्रसाधयामासेति तदक्षरब्राह्मणसिद्धंतत्त्वंस्तौति ।

ओतंप्रोतं यत्रचसर्वं गगनांतं यो-
स्थूलानण्वादिषुसिद्धोऽक्षरसंज्ञः ।

ज्ञाताऽतोऽन्यो नेत्युपलभ्योनचवे-
द्यस्तं संसारध्वांतविनाशं० ॥३९॥

ओतंप्रोतमिति । गगनांतमऽव्याकृताका-
शपर्यंतं सर्वंइदंजगत् यत्रविष्णौओतंचप्रोतंच तंतु-
षुपटवत्कल्पितमित्यर्थः । यश्चास्थूलानण्वादिषु अ-
स्थूलमनण्वऽह्रस्वमदीर्घमित्यादिवाक्येषु अक्षरसंज्ञः
नाशरहिततयासर्वव्यापकत्वेनवाऽक्षरइतिसंज्ञायस्यस
सिद्धःप्रसिद्धःसर्वेष्वपिक्षेत्रेषु । अतोऽक्षरादन्योज्ञाता-
नास्तिसर्वस्यतद्दृश्यत्वादित्यन्यप्रतिषेधेनोपलभ्यःज्ञा-
तव्यःनतुविषयतयावेद्यः। अविज्ञातंविज्ञातृनान्यदतो-
ऽस्तिविज्ञातृइतिश्रुतेस्तमीडइत्यर्थः ॥ ३९ ॥

ननुप्रत्यक्षादिप्रमाणैःसिद्धेद्वैतेउपलभ्यमानेकथ-
मितरप्रतिषेधेनोपलभ्यंब्रह्मेत्याशंक्याह ।

तावत्सर्वं सत्यमिवाभाति यदेत-
द्यावत्सोस्मीत्यात्मनियोज्ञोनहिदृ

ष्टः । दृष्टेतस्मिन्सर्वमसत्यंभवती-
दं तं संसारध्वांतविना० ॥ ४० ॥

तावदिति । यावद्यदा आत्मनिकार्यकारणसंघाते यःज्ञश्चिद्धातुःसाक्षित्वेनवर्त्तते सयावद्ब्रह्मास्मीतिब्रह्मतयानदृष्टोनावलोकितः । तावदेवयदेतद्दृश्यतेजगदिदंसर्वंभ्रांत्यासत्यमिवाभाति प्रबोधात्पूर्वं स्वप्नवत् । तस्मिन्प्रत्यगभिन्नेब्रह्मणिदृष्टेसर्वमिदंबाह्यं वियदादिआंतरंकर्तृत्वादिचासत्यंभवति । पूर्वमप्यसत्यमेवतत्तदाऽसत्यमितिज्ञातंभवति बोधानंतरंस्वप्नवदित्यर्थः । "यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत्" इत्यादिश्रुतेः । यत्रविद्यावस्थायामस्याधिकारिणःसर्वंजगदात्मैवाभूद्विद्ययात्ममात्रतयाज्ञातमभूत्तत्तदाकेनकरणेनकंविषयंपश्येन्नकिंचिदपि सर्वस्यात्ममात्रतयाज्ञातृज्ञानज्ञेयानामभावादित्यर्थः । प्रत्यक्षादिप्रमाणानांव्यावहारिकविषयत्वेन तद्विषयप्रपंचस्यनिषेधमुखेनतात्त्विकप्रमाणभूतयाश्रुत्याब्रह्मोपलब्धुं

शक्यतइति । ननु "सत्यकामःसत्यसंकल्पःसर्वगंधः सर्वरसः" इत्यादौब्रह्मणःसप्रपंचत्वस्यापिश्रुतिसिद्धत्वात्कथंनिष्प्रपंचवाक्येनतन्निषेधः । नचपरमार्थतोब्रह्मणःसप्रपंचनिष्प्रपंचोभयरूपत्वंपरस्परविरोधेनवक्तुमशक्यमितिवाच्यम् । स्वतोनिष्प्रपंचस्यब्रह्मणःपृथिव्याद्युपाधितएवसप्रपंचत्वोपपत्तिरितिचेन्न । स्वतोविरुद्धयोर्द्वयोरुपाधितोऽपिपरमार्थतएकत्रसंबंधानुपपत्तेः । नहिस्वतोधवलेस्फटिकेजपाकुसुमोपाधिवशात्प्रतीयमानोरक्तिमापरमार्थतोदृश्यते । नवासूर्यतमसोःपरमार्थसंबंधघटकःकश्चिदुपाधिरस्ति । तदुक्तंसूत्रकारेण । "नस्थानतोऽपिपरस्योभयलिंगंसर्वत्रहि" । स्थानतोऽप्युपाधिद्वारापिपरस्यब्रह्मणउभयलिंगंनिष्प्रपंचसप्रपंचोभयरूपत्वंनभवतिउक्तयुक्तेरेव सर्वत्रवेदांतेषु । "अशब्दमस्पर्शम् । अस्थूलमनणु । यत्तदद्रेश्यमग्राह्यम् । अदृश्येऽनात्म्येऽनिरुक्ते । अदृश्यमव्यवहार्यम् । सवाएषमहानजआत्माऽजरोऽमरः । यतोवाचोनिवर्तंते । सएषनेतिनेत्यात्मा । अ-

थातआदेशोनेतिनेति । यत्रनान्यत्पश्यति । यत्रत्वस्यसर्वमात्मैवाभूत्" इत्यादिषुनिष्प्रपंचब्रह्मणएवश्रुतत्वाच्चेतिसूत्रार्थः । अपरमार्थतस्तुपरस्परविरुद्धमपिरूपद्वयमेकत्रभवत्येव स्फटिकादौदर्शनात् । नन्वन्यतरमिथ्यात्वेसप्रपंचश्रुत्यनुरोधेननिष्प्रपंचस्य वारोपितत्वंकिंनस्यादितिचेन्न । तस्यप्रतिवेदांतमुपक्रमादिभिःषड्विधलिंगैस्तात्पर्येणावगम्यमानत्वात् । द्वेवावब्रह्मणोरूपेइतिसप्रपंचत्वंप्रपंच्यनेतिनेतीति निषेधात् । सप्रपंचश्रुतेःनिषेध्यसमर्पकत्वेननिषेधश्रुतिशेषत्वावगमाच्च । ननुकिमर्थंसप्रपंचत्वंब्रह्मणइत्युक्त्वानिषिध्यते । "प्रक्षालनाद्धिपंकस्यदूरादस्पर्शनंवरम्" इतिन्यायेनब्रह्मणःप्रपंचसंबंधावचनस्यैवयुक्तत्वादितिचेच्छृणुतर्हिश्रुतेरभिप्रायम् । एकमेवाद्वितीयंब्रह्मेत्युक्तेसत्याकाशादौद्वितीयेसति कथमद्वितीयत्वंब्रह्मणइत्याशंकाजायते । अतस्तन्निवृत्त्यर्थंब्रह्मणएवोपादानाद्वियदादिसर्वप्रपंचोत्पत्तिकथनेनकार्यस्योपादानादन्यत्रानवस्थानेनब्रह्मण्येवावस्थानमुक्त्वानंत-

रंनेहनानास्तिकिंचनेत्यादिवाक्यैःसप्रपंचमुक्तप्रपंचे-निषिद्धे एकमेवाद्वितीयंब्रह्मेत्येतत्प्रतिष्ठितंभवति अन्यथाब्रह्मणःसृष्टिवाक्यैःसप्रपंचत्वमनुक्त्वा प्रथम-तएवनेहनानास्तीतिनिषेध इहनिषिध्यमानघटस्या-न्यत्रसत्ववत् अन्यत्रप्रपंचस्यसत्वशंकास्यादितिश्रु-तिर्मन्यते । सप्रपंचब्रह्मोपासनंतु "वाचंधेनुमुपासीत" इत्यादिवदारोपितप्रपंचविषयत्वेनाप्युपपद्यते । नैवं-निष्प्रपंचब्रह्मणएवारोपितत्वेनोपासनविषयत्वंकिंन-स्यादितिवाच्यं । तस्यानुपास्यत्वात् । "तदेवब्रह्मत्वं-विद्धिनेदंयदिदमुपासते" इत्युपास्यत्वनिषेधात् । नि-ष्प्रपंचवाक्येषुउपासनाविधानाश्रवणादारोपितरूपे-णैवोपासनोपपत्तौप्रतिवेदांतं तात्पर्येणप्रपंचनिषेधा-नुपपत्तेश्च । निष्प्रपंचस्यैवपरमार्थत्वंसूत्रकारेणाप्युक्तं । "अरूपवदेवहितत्प्रधानत्वात्" इत्यरूपवदेवहिब्रह्म-परमार्थतोभवितुमर्हति । सर्वासांश्रुतीनामुपक्रमादि-भिस्तत्प्रधानत्वात् । निष्प्रपंचब्रह्मपरत्वस्यैवदर्शनादि-

तिसूत्रार्थः । तस्मात्परमार्थतोनिष्प्रपंचमेवब्रह्मेत्यलंसं-
ग्रहव्याख्यानेऽतिविस्तरेण ॥ ४० ॥

नन्वेवं सहस्रशःप्रतिपादितेऽपितत्त्वेरागादिदोष-
विनिर्मुक्तआत्मानोपलभ्यते । तंकथंपरमात्मास्मीति-
साक्षात्कुर्यादित्याशंक्याह ।

रागामुक्तं लोहयुतंहेमयथाग्नौ यो-
गाष्टांगैरुज्ज्वलितज्ञानमयाग्नौ ॥
दग्ध्वात्मानं ज्ञंपरिशिष्टंचविदुर्यं
तंसंसारध्वांतविनाशंह० ॥ ४१ ॥

रागेति । रागामुक्तं रागादिकलुषीकृतंआ-
त्मानं दग्ध्वा प्रताप्यविशोध्य परिशिष्टंचज्ञंचिद्धातुं
यंविदुरितिसंबंधः । क्वदग्ध्वेत्याकांक्षायामाह । योगा-
ष्टांगैरुज्ज्वलितज्ञानमयाग्नौ योगःप्रत्यग्ब्रह्मणोरैक्यं-
तत्प्राप्तौसाधनभूतैरष्टांगैःनिर्गुणविषयैर्यमनियमादि-
भिरष्टभिरंगैर्निर्गुणयोगाष्टांगानिचात्मयोगग्रंथेयोग-
विशेषेउक्तानि। "देहाक्षादौविरक्तिर्यमइहनियमःस्वा-

त्मतत्त्वेऽनुरक्तिः बाह्यौदासीन्यमेवासनमस्तुनियतस्ख-क्षरार्थोमृषार्थात् । प्रत्याहारःस्वबुद्धेर्विषयविमुखताधा-रणास्वात्मनिष्ठा ध्यानंब्रह्माहमस्मीतिदृगनन्यत्वममो-हात्मसंवित्समाधिः" इति । तैःकाष्ठस्थानीयैरुज्ज्वलि-तोयोज्ञनमयोऽग्निस्तत्र । अथवाऽपरिपक्वचित्तस्यपतं-जलिनासूत्रितानिप्रसिद्धान्येवयमनियमादीनियोगा-ष्टांगानितैरुज्ज्वलितःप्रकाशितोयोज्ञानमयोऽग्निस्त-स्मिन्नित्यर्थः । तानिचसूत्राणीमानि । "अहिंसास-त्यास्तेयब्रह्मचर्यापरिग्रहायमाः । शौचसंतोषतपःस्वा-ध्यायेश्वरप्रणिधानानिनियमाः" । स्वाध्यायः प्रण-वजपः ईश्वरप्रणिधानमीश्वरभक्तिः "स्थिरसुखमास-नम्" यादृशेनदेहस्थापनेनयस्यपुरुषस्यावयवव्यथा-नुत्पत्तिलक्षणंसुखं देहचलनराहित्यलक्षणंस्थैर्यंचसंप-द्यते तदेवतस्यपद्मस्वस्तिकाद्यन्यतमंमुख्यमासनमि-त्यर्थः । "तस्मिन्सतिश्वासप्रश्वासयोर्गतिविच्छेदःप्रा-णायामः" । आसनेदृढेसतिदशविंशतित्रिंशदादिक्र-मेणप्रणवजपैःप्रतिपक्षंप्रतिमासंस्वाभाविकवायुगति-

विच्छेदःप्राणायामइत्यर्थः । "स्वविषयाऽसंप्रयोगेचित्तस्वरूपानुकारइवेंद्रियाणांप्रत्याहारः"। इंद्रियाणांशब्दस्पर्शादिस्वस्वविषयैरसंप्रयोगेननिरुद्धचित्तरूपानुकारइवयत्तूष्णीमवस्थानंसप्रत्याहारइत्यर्थः । "देशबंधश्चित्तस्यधारणा"। देशे आधारादौआत्मनिवाचित्तस्यस्थापनंधारणेत्यर्थः ।"तत्रप्रत्ययैकतानताध्यानम्"। तत्रात्मादौप्रत्ययसातत्यंध्यानमित्यर्थः। "तदेवार्थमात्रनिर्भासंस्वरूपशून्यमिवसमाधिः" । ध्यानमेवध्यातृध्यानेविहायध्येयमात्रगोचरंसत्समाधिरित्युच्यते । तदाध्यानस्वरूपंशून्यमिवभवतिध्यानविषयप्रत्ययाभावादित्यर्थः। एतत्साध्योयस्त्वंपदार्थसाक्षात्कारस्तस्मिन्नग्नौशोधनेदृष्टांतमाह।लोहयुतंहेमयथाग्नाविति । अयोमिश्रितंसुवर्णअग्नौप्रताप्याऽयोविहायसुवर्णंयथागृह्णंतितद्वदित्यर्थः ॥ ४१ ॥

इदानींभक्तेःफलाभिधानपूर्वकंस्तौति ।

यं विज्ञानज्योतिषमाद्यं सुविभांतं

हृद्यर्केंद्वग्न्योकसमीड्यंतडिदाभ-
म् । भक्त्याराध्येहैवविशंत्यात्म-
निसंतं तं संसारध्वांतविना० ॥४२॥

यमिति । हृदिहृदये तडिदाभं तडिद्वद्विद्युद्व-त्आभायथाभवतितथा सुविभांतं प्रत्यक्त्वेनसुष्ठुप्रकाशमानं विज्ञानज्योतिषंविज्ञानप्रकाशरूपंनतुजडरूपंज्योतिः । ज्योतिषांज्योतिरितिश्रुतेः । आद्यं सर्वकारणं । अर्केंद्वग्न्योकसम् । अर्केंद्वग्नयओकांसिउपलब्धिस्थानानियस्यतत्रह्युपास्यमानःपरमेश्वरःप्रसन्नो भवति । ईड्यंस्तुत्यं । भक्त्याश्रवणादिभिरष्टांगयोगैरुपासनाभिश्चयाभक्तिर्भजनंतयायमाराध्यात्मनिस्वस्मिन्स्वरूपतयासंतंवर्तमानमिहैवजीवत्येवदेहेविशंतितत्तदात्मानोभवंतीत्यर्थः । अन्यस्यप्रवेशस्यासंभवात्तमीडे ॥ ४२ ॥

इदानींस्तुतिकर्तुःफलाभिधानपूर्वकंस्तौति ।

पायाद्भक्तं स्वात्मनिसंतं पुरुषंयो








भक्त्यास्तौतीत्यागिरसंविष्णुरिमं-
माम् । इत्यात्मानं स्वात्मनिसंहृ-
त्यसदैकस्तं संसारध्वांतवि० ॥४३॥

पायादिति । योविष्णुरिमंभक्तं पायात्रक्षतु तमीडेइतिसंबंधः । कथंभूतं स्वात्मनिसंतं विष्णुरस्मीत्यभेदेनवर्तमानंभक्तं सएवमुख्योभक्तः । "चतुर्विधाभजंतेमाम्" इत्युपक्रम्य "ज्ञानीत्वात्मैवमेमतमिति" स्तुतत्वात् । "तक्षादिनीचैःसुकृतानऽसत्यान्पाषाणमृद्दारुमयादिदेवान् । भजंतियेमाधवनिंदकास्तेपूर्णःसदानंदमयोहिविष्णुः" इतिभेददर्शिनांनिंदितत्वाच्च । केनाभिप्रायेणविष्णोस्तद्रक्षणेप्रवृत्तिस्तत्राह । स्वात्मानं स्वस्यांतःकरणं स्वात्मनि स्वस्यस्वरूपभूतेमयि संहृत्यनिरुध्यांगिरसमंगानांरसभूतम् । "एषहिअंगानांहिरसः" इतिश्रुतेः । देहाद्यनात्मत्यागेनपरिशिष्टंचिदानंदरूपमित्यर्थः । इमंमांसदाभक्त्यास्तौति प्रत्यगभिन्नत्वेनस्तौतीत्यभिप्रायेणविष्णुःपायादितिसंबंधस्तमीडे ॥ ४३ ॥

इदानींस्तोत्रपाठकानांस्तोत्रार्थमजानतांपाठमात्रादेवविष्णुलोकप्राप्त्याक्रममुक्तिमेतत्स्तोत्रार्थंजानतामिहैवपरिपूर्णपरमानंदचित्प्रकाशविष्णुरूपेणावस्थानरूपमुक्तिंचफलंदर्शयन्स्तोत्रमुपसंहरति ॥

इत्थंस्तोत्रं भक्तजनेड्यंभवभीति-
ध्वांतार्काभंभगवत्पादीयमिदंयः ।
विष्णोर्लोकं पठतिशृणोतिव्रजति-
ज्ञो ज्ञानंज्ञेयं स्वात्मनिचाप्नोतिम-
नुष्यः ॥४४॥ इतिश्रीमच्छंकराचा-
र्यविरचितंहरिमीडेस्तोत्रंसंपूर्णम् ॥

इत्थमिति । योनरइत्थमुक्तप्रकारेण इदंस्तोत्रं भक्तानामिहाधिकारइत्याह । भक्तजनेड्यंविष्णोर्भक्तिमद्भिर्जनैरीड्यमितियावत् । भवभीतिध्वांतार्काभं संसारदुःखतमश्चंडभास्करं भगवत्पादीयं सर्वज्ञश्रीशंकरभगवतासकललोकानुजिघृक्षयाप्रणीतं पठति उ-

च्चैरुच्चारयति शृणोति पठत्सुसत्सुस्वयंश्रुत्वातिष्ठति स विष्णोः अनंतकल्याणगुणमणिगणसागरस्यानंतलीलाविहारपरवशीकृतभक्तलोकस्यशुद्धसत्त्वरूपस्यसर्वज्ञस्यसर्वशक्तेर्भगवतःपरमेश्वरस्य लोकं वैकुंठाख्यं व्रजति गच्छति ज्ञोयःएतदर्थपरिज्ञानीपठति । सस्वात्मनिज्ञानं तत्त्वसाक्षात्कारं ज्ञेयंतद्विषयंब्रह्मचमनुष्यएवसन्निहैवाप्नोति स्वयमेवस्वप्रकाशपरिपूर्णपरमानंदब्रह्मात्मनावतिष्ठतइत्यर्थः । "ब्रह्मवेदब्रह्मैवभवति" इत्यादिश्रुतेरिति ॥ ४५ ॥

वाचाययाश्रुतिवचांसिचभेदवादिकौलेयकैर्मलिनितानिविशोधितानि । तस्यामशुद्धमपियद्वचनंमदीयं संमिश्रितंशंकरगुरोर्विबुधाःक्षमंताम् ॥ १ ॥ यस्याक्षिपादपदवींसकृदप्यऽवाप्य भूयोनसंसृतिकुमार्गमवाप्नुवंति । लोकास्तमात्मसुखमप्रमनःप्रचारं कैवल्ययोगिगुरुमाभजतांमनोमे ॥ २ ॥ इंदीवरेंद्रमणिसुंदरमिंदिरेशं वंदीकृतेंद्ररिपुवृंदममंदवीर्यम् । मंदस्मितप्रसरनंदितलोकवृंदं वंदेद्विजेंद्रकुलनंदनरामचंद्रम् ॥

॥ ३ ॥ रक्षोमंडलखंडपंडितमहावेतंडशुंडालसद् दोर्दंडंनिखिलाण्डपिण्डनकृतौशौंडंतथामुंडिभिः । ध्येयं दंडकमंडलूपकरणैश्चंडांशुवंशोद्भवं गंडेकुंडलमंडितंरघुपतिं कोदंडपाणिंभजे ॥ ४ ॥ इंद्रूपलेंद्रमणिसुंदरमिंदुचूडं वृंदारवृंदपरिवंदितपादपद्मम् । आमंदमंदहसितोल्लसदाननेंदुं वंदामहेवयममंदमुदाऽम्बिकेशम् ॥ ॥ ५ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यकैवल्यानंदयोगींद्रपादकमलभृंगायमानस्वयंप्रकाशाख्ययतिविरचिताशंकरभगवत्पादकृतहरिस्तुतिव्याख्या हरितत्त्वमुक्तावली संपूर्णा ॥ शुभमस्तु पाठकेभ्यः ॥

विक्रमसंवति । १९४४ । भाद्रेमासे

समाप्तम् ॥

# शुद्धिपत्रम् ।

| पृष्ठं | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १८ | १ | मनुष्याश्च | मनुष्यांश्च |
| १८ | १८ | नकरतिर्यगादि | नरकतिर्यगादि |
| २० | २ | आजामेकां | अजामेकां |
| २४ | २ | पत्युर्न निमित्त | पत्युर्निमित्त |
| २६ | ६ | उपसंहारदर्शनान्नेतिचेन्न- | "उपसंहारदर्शनान्नेतिचेन्न- |
| | | "क्षीरवद्धि | क्षीरवद्धि । |
| ३७ | १२ | ब्रह्मेवेदममृतं | ब्रह्मैवेदममृतं |
| ४२ | २ | यद्वैतन्ननपश्यति | यद्वैतन्नपश्यति |
| ४३ | ४ | क्षितिरिति | क्षतिरिति |
| ४३ | ९ | यद्यविषयाख्यम् | यद्यद्विषयाख्यम् |
| ६५ | १ | माया | मायाम् |
| ७२ | ७ | शुद्धमतंतं | शुद्धमनंतं |
| ७४ | १ | वल्यांप्रतिपादितं | वह्यांप्रतिपादितं |
| ७५ | १७ | विनासमर्थत्वात् । | विनाऽसमर्थत्वात् । |
| ८९ | ९ | बहुभिः | बह्वीभिः |
| ९६ | १४ | देहेवा | हेदेवा |
| १२४ | ९ | ध्वात | ध्वांत |

यह हरिमीडेकीटीका मुंबईमै मोतीबाजारमै पंडितज्येष्ठाराममुकुंदजीकी दुकान-पर मिलेगी. तथा हरिप्रसादभगीरथकी दुकानपर मिलेगी.



